No share prices,
no political fortunes, yet...

# "Over 40% of Heritage readers are professionals or executives, 61% from households with a professional / executive as the chief wage earner. Half hold a postgraduate degree or a professional diploma."

– from an IMRB survey conducted in Oct. 1986




It's an unusual magazine. It has a vision for today and tomorrow.

It features ancient cities and contemporary fiction, culture and scientific developments, instead of filmstar interviews and political gossip. And it has found a growing readership, an IMRB survey reveals. Professionals, executives and their families are reading The Heritage in depth – 40% from cover to cover, 42% more than half the magazine.

More than 80% of The Heritage readers are reading an issue more than once.

And over 90% are slowly building their own Heritage collection.

Isn't it time you discovered why?



# THE HERITAGE



CMP-2155

**So much in store, month after month.**

कविहृदयम्–

# आन्तरः हेतुः प्रीतेः

**व्यतिषजति पदार्थान् आन्तरः कोऽपि हेतुः।**
**न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।।**
**विकसति हि पतङ्गस्योदये पुण्डरीकं।**
**द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः।।**

**– भवभूतिः**

"लोके वयं बहूनि वस्तूनि पश्यामः। बहुभिः मिलामः च। किन्तु तत्र केवलं कानिचन वस्तूनि केचन जनाः च अस्मान् आकर्षन्ति। केषुचित् स्नेहः, केषुचित् उदासीनता, केषुचित् वैरं च सम्भवेत्। सर्वत्रापि तत्तस्य कारणं वक्तुं वयं न शक्नुमः। अज्ञातं किञ्चन कारणं अत्र मध्यवर्ति भवति। प्रीतिः (तादृशः अन्यः भावः वा) बाह्यं निमित्तं न अपेक्षते।"

अत्र निदर्शनरूपेण भवभूतिः उदाहरणद्वयं प्रदर्शयति- सूर्यः उष्णकिरणः। कमलं तु अतीवकोमलम्। तयोः मध्ये महत् अन्तरम्। तथापि सूर्ये उदिते कमलं सन्तोषेण विकसति। किम् अत्र कारणम्? एवम् एव चन्द्रः कोमलकिरणः। चन्द्रकान्तः तु शिलारूपः। तथापि कौमुदीकारणतः चन्द्रकान्तः द्रवति इति श्रूयते। किम् अत्र बाह्यं कारण वक्तुं शक्यते?

रक्तसम्बन्धः बान्धव्ये हेतुः इति लोके सामान्या प्रतीतिः अस्ति। किन्तु किम् एतत् सत्यम्? प्रतिगृहं दायादकलहः रक्तसम्बन्धिषु, तत्रापि समानोदरेषु!

रक्तसम्बन्धे सत्यपि स्नेहशून्यता, अकस्मात् प्राप्तपरिचये अपि आत्मीयता एतदुभयम् अपि लोके दृश्यते।

भावः हृदयसम्बन्धी। समानस्थायिकः भावः इतरत्र यदा दृश्यते तदा अस्माकं हृदये अपि रूपकदर्शनेन सहृदयस्य इव भावपरिस्पन्दः। निरन्तरः सम्बन्धः भावम् उद्दीपयति।

किमर्थम् अत्र प्रीतिः उदिता? किमर्थं तत्र प्रीतिः न उदिता? किमर्थं तस्य विमुखता? इत्यादिषु सर्वत्र अपि एकम् एव उत्तरम्- 'अचिन्त्याः खलु (ये) भावाः, न तान् तर्केण योजयेत्' इति।

# अव्ययीभावसमासः

शिष्यः- श्रीमन्, अव्ययीभावसमासविषये मया किञ्चित् ज्ञातव्यम् अस्ति।

आचार्यः- पृच्छतु तावत्। अव्ययीभावसमासविषयकं पदम् अव्ययं भवति इति तु सामान्यः विषयः।

शि - अकारान्तं पदम् अन्ते अस्ति चेत् तस्य 'अम्' भवति खलु। तन्नाम नपुंसकलिङ्गस्य ज्ञानशब्दस्य एकवचनवत् रूपं भवति।

आ - तच्च अव्ययम्। तन्नाम विभिन्नविभक्तिषु तस्य रूपभेदः न भवति।

शि - किन्तु प्रतिवर्षे, प्रतिगृहस्य, प्रत्येकेन इत्यादीनि विभक्त्यन्तानि रूपाणि अपि दृश्यन्ते खलु?

आ - एतद्विषये किञ्चित् विशेषतः ज्ञातव्यम् अस्ति। अव्ययीभावसमासविषयकस्य अकारान्तस्य पदस्य तृतीयाविभक्त्यन्तं पञ्चमीविभक्त्यन्तं सप्तमीविभक्त्यन्तं च रूपं भवति। तानि विभक्त्यन्तानि रूपाणि अपि अव्ययानि एव।

उदाहरणं तु –

प्रतिगृहम् – प्रतिगृहेण, प्रतिगृहात्, प्रतिगृहे।
प्रतिवर्षम् – प्रतिवर्षेण, प्रतिवर्षात्, प्रतिवर्षे।
प्रतिपुस्तकं – प्रतिपुस्तकेन, प्रतिपुस्तकात्, प्रतिपुस्तके।

शि - एतस्य अयम् अर्थः सिध्यति यत् षष्ठीविभक्त्यन्तं रूपं न भवति इति।

आ - आं, युक्तम् ऊहितं भवता। प्रतिगृहस्य, प्रतिवर्षस्य, प्रतिविद्यालयस्य इत्यादीनि रूपाणि असाधूनि एव।

शि - 'प्रत्येकस्य' इति रूपम् अपि असाधु एव, यच्च व्यवहारे तदा तदा श्रूयते।

आ - सत्यम्। प्रत्येकः इति अपि रूपं प्रयुक्तं श्रुतं मया। प्रत्येकः इति कथं साधयितुं शक्यते इति न जानामि। अतः प्रत्येकं जनः, प्रत्येकं शाला इत्यादिरूपेण एव

प्रयोक्तव्यम्।

शि - श्रीमन्! शालां शालां = ...........?

आ - प्रतिशालम् इति अकारान्तम् एव रूपम्। एवम् एव प्रतिमालं, प्रतिबालिकम्, प्रतिपत्रिकम् इत्यादिषु अपि ज्ञातव्यम्। अन्नन्तेषु अपि एषा एव व्यवस्था इति स्मरतु। अध्यात्मम् इति उदाहरणम्। किन्तु व्यवहारे एतादृशानि रूपाणि अल्पानि।

शि - यथामति, यथाशक्ति इत्यादौ इकारान्तः शब्दः अव्ययीभावस्य अन्ते अस्ति चेत् तस्य विसर्गः न श्रूयते। एवं खलु?

आ - आम्, अधिहरि, प्रतिगिरि, यथारुचि इत्यादीनि उदाहरणानि।

शि - ईकारान्तं पदम् अन्ते अस्ति चेत्?

आ - इकारान्तत्वं, तन्नाम् ह्रस्वत्वम् भवति – आकारान्तस्य अकारान्तत्वमिव। प्रतिनदि, प्रतिगृहिणि इत्यादीनि उदाहरणानि। उकारान्तस्यापि विसर्गः न श्रूयते। ऊकारान्तं किमपि यदि स्यात् तर्हि तस्य ह्रस्वत्वम्।

शि - आचार्य! यथामत्या, यथामतेः इत्यादीनि रूपाणि न भवन्ति वा?

आ - सर्वथा न भवन्ति। अकारान्तस्य केवलं तृतीया-पञ्चमी-सप्तम्यन्तानि रूपाणि। न तु इकारान्तादीनाम् अपि।

शि - येषु विभक्त्यन्तरूपेषु विधानं नास्ति तादृशानां प्रयोगः कथम्?

आ - यथा –

प्रत्येकं विद्यालयस्य -----।<br>
प्रतिचित्रं शतस्य रूप्यकाणां व्ययः।<br>
प्रतिभिक्षुकं धनं दत्तवान्।

शि - मम तु काचन भ्रान्तिः आसीत् यत् अव्ययीभावसमासविशिष्टं पदम् अव्ययं भवति। ततः प्रतिगृहे इत्यादीनि रूपाणि असाधूनि इति। तानि अपि विभक्त्यन्तानि अव्ययानि इति अहं न ज्ञातवान् आसम्।

रसप्रश्नाः –

# सीतापहरणम्

[रामस्य पञ्चवटीवासानन्तरं सीतापहरणपर्यन्तस्य रामायणकथाभागस्य आधारेण अत्र केचन प्रश्नाः सङ्गृहीताः। उत्तररूपेण विकल्पत्रयं सूचितम् अस्ति अपि। युक्तम् उत्तरं जानन्तु]

I सीतां मारयितुम् उद्युक्तायाः राक्षस्याः नासिकाकर्णादिच्छेदनं कृतवान् लक्ष्मणः। तस्याः नाम्नः शुद्धं स्वरूपं किम्?

१. शूर्पणखा। २. शूर्पणखी। ३. शूर्पनखा। ४. शूर्पनखी।

II तस्याः राक्षस्याः अग्रजः, यश्च रामेण हतः, कुत्र निवसति स्म?

१. लङ्कायाम्। २. जनस्थाने। ३. किष्किन्धायाम्।

III रामेण सह युद्धे मृतयोः खरस्य अनुचरयोः नाम किम्?

१. त्रिशिराः दूषणः च इति। २. सुबाहुः मारीचः च इति।
३. इल्वलः दूषणः च इति।

IV 'सीता अपहरणीया' इति कुतन्त्रं रावणाय कः बोधितवान्?

१. न कोऽपि, रावणस्य मनसि स्वयं स्फुरितम्।
२. राक्षसबन्धुः मारीचः।
३. खरस्य बन्धुः दूतत्वेन आगतः अकम्पनः।

V 'सीतापहरणे साहाय्यं करणीयम्' इति रावणस्य प्रार्थनां श्रुत्वा मारीचः किं कृतवान्?

१. 'एतादृशं चिन्तनम् अयुक्तम्' इति हितं बोधितवान्।
२. 'युक्तम् एतत्' इति प्रोत्साहकवचनानि उक्तवान्।
३. किमपि अनुक्त्वा कार्यार्थं सिद्धः जातः।

VI सीतां नयतः रावणस्य विरोधम् आचरितवतः गृध्रस्य नाम किम्?

१. गृध्रराजः। २. जटायुः। ३. सम्पातिः।

VII सीतया पातितानि आभरणानि कुत्र पतितानि?

१. ऋष्यमूकपर्वते। २. किष्किन्धानगरे। ३. कुत्रापि अरण्यमध्ये।

उत्तराणि –

I–१. II–२. III–१. IV–३. V–१. VI–२. VII–१.

# चन्दमामा

संस्थापकः- 'चक्रपाणिः'      सञ्चालकः- 'नागिरेड्डी'

पञ्चषाणि वर्षाणि संस्कृतम् अधीत्य अपि बहवः शुद्धं वक्तुं न शक्नुवन्ति, सम्भाषणाभ्यासाभावात्। किन्तु ये निरन्तरं सम्भाषणं कुर्वन्ति तेषां भाषा अपि निर्दुष्टा भवति इति न। असङ्ख्याः साधारणदोषाः तत्र दृश्यन्ते। केन कारणेन एवं भवति?

निर्दुष्टतायाः कारणं केवलम् अध्ययनं वा, केवलं सम्भाषणं वा न इति तु सिद्धम्। कुत्रचित् पञ्चषाणि वर्षाणि संस्कृतम् अधीत्य संस्कृतेन एव व्यवहरतां सम्भाषणे अपि गणनीयप्रमाणेन दोषाः दृश्यन्ते! अहो दोषकरणस्य प्राबल्यम्!

सम्भाषणप्रवृत्त्या सहैव काचित् प्रज्ञा अपि अपेक्षिता। तन्नाम - सम्भाषणं यदा प्रवृत्तौ आगच्छति तदा यान्त्रिकता सहजतया भवति एव। अतः चिन्तनभागः तत्र न्यूनः भवति। कदाचित् न भवति अपि। अस्पष्टं ज्ञातानाम् अंशानां प्रयोगे प्रायः प्रमादः भवति एव। स्पष्टं ज्ञातव्याः अंशाः तु बहवः। एतदर्थम् एव उच्यते – सम्भाषणेन सहैव प्रज्ञा अपि अपेक्षिता इति।

स्वव्यवहारः एव निर्दुष्टताप्राप्त्यै प्रमुखं साधनम्। प्रयोगसमये जागरूकता, प्रयुक्तस्य परिशीलनं, परिशीलिते अंशे पुनश्चिन्तनम् – एवं क्रमेण निर्दुष्टतां प्राप्तुं शक्येत।




सम्पुटः- ४      डिसेम्बर्-८७      सञ्चिका-९

प्रतिकृतिमूल्यं रू. २-५०  * वार्षिकं ग्राहकशुल्कं रू. ३०-००

## रसवार्ता:



### समुद्रे नगरम्!

भूमौ वासार्थम् अवकाशः अपर्याप्तः इति समस्या जापान् जनजीवनं न बाधते। यतः टोकियोनगरतः १५० कि.मी. दूरे समुद्रे एकं नगरं निर्मातुं जपानदेशः प्रयतमानः अस्ति। ५ कि.मी. विस्तृतस्य एतस्य नगरस्य आधारतया केचन प्रबलाः स्तम्भाः सन्ति। १०० मिलियन् टन् मितस्य अयसः उपयोगेन निर्मीयमाणस्य एतस्य समुद्रनगरस्य निर्माणार्थं २ लक्ष मिलीयन् डालर् व्ययः भवेत् इति कल्प्यते!

### उन्नतः गजः!

सामान्यतः गजाः नवत्यङ्गुलमिताः शताङ्गुलमिताः वा उन्नताः भवन्ति। किन्तु नेपालदेशे 'शुक्ला काण्टा वैल्ड् लैफ् रिसर्व्' स्थाने ११५ अङ्गुलोन्नतः गजः दृष्टः। ४५ वर्षीयः एषः गजः प्रपञ्चे एव अत्युन्नतः इति परिगण्यते। नेपाल-भारत-सीमाप्रान्ते सामान्यतः ३००० हरिणाः (याण्टिलोप्स्) सन्ति। एतेषां हरिणानां शृङ्गेषु षट् शाखाः भवन्ति।





### लेनिन्महोदयस्य घटी

१९१८ तमवत्सरपर्यन्तं लेनिन्महोदयेन धृतायाः रजतमय्याः कोषघट्याः सघोषविक्रयणं म्यूनिच्नगरे १०३,००० डालर् मूल्येन प्राचलत्। १९१७ वत्सरस्य बोल्षिविक् विप्लवतः पूर्वं जारजातीयानाम् अधीने स्थिताम् एतां घटीं लेनिन् किञ्चित्कालं धृतवान् आसीत्। १९१७ तमे वत्सरे जर्मन् राजकीयवेत्ताय कार्ल लेब्निक्महोदयाय उपायनरूपेण दत्तवान् आसीत् अपि।

### योगचिकित्सा!

हृदयरोगः यथा न आगच्छेत् तथा प्रतिरोधार्थम्, आगतस्य निवारणार्थं च किं योगाभ्यासः उपकरोति? एतद्विषये, संशोधनार्थं भारत-सोवियत् विज्ञानवेत्तारः संयुक्तसहकाररूपेण कार्यम् आरब्धवन्तः सन्ति। देहलीनगरस्थायाः अखिलभारतीय वैद्यकीय-विज्ञानसंस्थायाः मास्कोनगरीयायाः कस्याश्चित् संस्थायाः च परस्परसहकारेण वर्षत्रयात्मकं संशोधनकार्यम् इदानीं प्रचलत् अस्ति।



# अशोकसुन्दरी

एकदा शिवपार्वत्यौ नन्दनवने विहरन्तौ आस्ताम्। तदा पार्वत्याः अपेक्षानुगुणं शिवः पार्वत्यै कल्पवृक्षं प्रदर्शितवान्। कल्पवृक्षस्य सामर्थ्यस्य परीक्षणार्थं पार्वती पृष्टवती- "मह्यम् एकं पुंसन्तानम् अनुगृह्णातु" इति। अपरक्षणे तस्याः हस्ते कश्चन सुन्दरः शिशुः आगत्य स्थितवान्। तस्य शिशोः नाम अशोकसुन्दरी इति निश्चितम्।

अशोकसुन्दर्याः सौन्दर्येण आकृष्टः हुण्डनामकः राक्षसः ताम् अपहृत्य नीत्वा 'यदा एषा प्राप्तवयस्का भविष्यति तदा मया परिणेतव्या' इति आलोचितवान्। अत्रान्तरे तेन राक्षसेन ज्ञातं यत् ऊर्वशीपुरूरवसोः पौत्राय नहुषाय एषा दातव्या इति पार्वत्याः सङ्कल्पः अस्ति इति। सः तद्दिने एव ततः प्रस्थाय नहुषस्य पालिकां धात्रीं वशीकृतवान्। सा कार्याकार्यम् अचिन्तयन्ती बालं नहुषम् अरण्यं नीतवती। राक्षसः तां धात्रीं मारयित्वा तं बालं स्वपत्न्याः हस्ते दत्त्वा- "एतस्य मांसेन रुचिकरं पाकं करोतु" इति आदिष्टवान्। सा पत्नी तं शिशुं पाचिकायै दत्त्वा पत्युः आज्ञां श्रावितवती। पाचिका मुग्धं तं शिशुं मारयितुम् अनिच्छन्ती शिशुं वसिष्ठाश्रमे त्यक्त्वा आगत्य अन्यस्य प्राणिनः कोमलमांसेन पाकं कृत्वा "शिशोः मांसेन एतत् निर्मितम्" इति उक्तवती।

वसिष्ठाश्रमे वर्धितः नहुषः कस्यचित् कवेः मुखात् काव्यरूपेण गीयमानं स्वजीवनवृत्तान्तं श्रुतवान्। वसिष्ठमुखात् तेन ज्ञातं यत् स्वस्य अशोकसुन्दर्याः च विवाहः दैवनिर्णीतः इति। अनन्तरं सः धनुर्बाणादीन् स्वीकृत्य अशोकसुन्दरीम् अन्विष्य गतवान्। यदा सः तत् स्थलं प्राप्तवान् तदा हुण्डराक्षसः परिणयविषये बलात्कारं प्रदर्शयन् आसीत्। नहुषः तं मारयित्वा अशोकसुन्दरीं परिणीतवान्। अनन्तरं सुखेन जीवितवान् च।





# नरकभयम्

सिंहपुरे शिवरामः केशवः इति नामकौ स्नेहितौ आस्ताम्। विद्याभ्याससमाप्तेः अनन्तरं तौ चिन्तितवन्तौ यत् उद्योगः नाम दास्यम्, अतः स्वशक्त्या वाणिज्यम् एव करणीयम् इति। अतः तौ नगरे पृथक् पृथक् वाणिज्यम् आरब्धवन्तौ।

वाणिज्यारम्भस्य अनन्तरं कदाचित् तौ परस्परं मिलितवन्तौ। तदा शिवरामः केशवम् उक्तवान्– "आवां वाणिज्यम् आरब्धवन्तौ। एकवर्षाभ्यन्तरे अस्माकं मूलधनं द्विगुणितं भविष्यति चेत् तदा वाणिज्यप्रयत्नः सफलः इति वक्तुं शक्यते। इदानीं वाणिज्ये दुर्मिश्रणं, तोलने वञ्चनं, अन्यथा गणनाप्रदर्शनम् इत्यादिकं सहजं जातम्। नगरे ये प्रसिद्धाः वणिजः सन्ति ते एतादृशं मार्गम् अनुसृतवन्तः इत्यतः एव एतादृशीं प्रसिद्धिं प्राप्तवन्तः। यदि अल्पे एव काले धनं सम्पादनीयं तर्हि आवाभ्याम् अपि तादृशः एव मार्गः अनुसरणीयः" इति।

तदा केशवः हसन् उक्तवान्– "दुर्मिश्रणादिकम् अकृत्वा न्यायमार्गेण वाणिज्यं कुर्मः चेदपि यत् प्राप्तव्यं तत् प्राप्यते एव। वाणिज्ये लाभांशः भवति एव खलु? दुराशा कदापि न उचिता। अन्यायेन सम्पादितं धनं कदापि स्थिरं न तिष्ठति" इति।

तदा शिवरामः असमाधानेन उक्तवान्– "वस्तुतः तादृशं कार्यं कर्तुं भवादृशानां धैर्यं नास्ति। अतः एवम् उपदिशन्ति भवन्तः। एतादृशं कार्यं कुर्मः चेत् मरणानन्तरं नरकलोकः प्राप्येत इति भीतिः भवताम्। वस्तुतः स्वर्गनरकादयः स्युः वा न वा इति कोऽपि न जानाति। अर्थहीनानाम् एतादृशानाम् अन्धविश्वासानां पालनम् एव नरकायते" इति।

"किमर्थं वादः? सर्वम् अपि तत्तस्य

भावानुगुणम् अस्ति" इति वदन् चर्चां समापितवान् केशवः।

एतदनन्तरं पुनः कदाचित् तौ वस्तूनां क्रयणार्थं नगरं गतवन्तौ। आवश्यकतानुगुणं वस्तूनि क्रेतुं तौ पृथक् जातौ।

तेषु दिनेषु तीव्रः आतपः आसीत्। निरन्तरम् अटनेन, तापकारणतः च महती श्रान्तिः शिवरामस्य। सः विश्रान्त्यर्थं छायाम् अन्विष्यन् मन्दं गच्छन् आसीत्। आतपाधिक्यं सोढुम् अशक्तः सः मूर्च्छया मार्गे एव पतितः।

समीपे लोहशालायां कार्यं कुर्वन् लोहकारः कोदण्डः शिवरामस्य पतनं दृष्टवान्। क्रियमाणं कार्यम् अर्धे एव त्यक्त्वा आगत्य शिवरामम् उन्नीय लोहशालां नीतवान्। मुखं जलेन सिक्तवान्।

किञ्चित्कालानन्तरं शिवरामः सचेतनः जातः। समीपे एव भयङ्कराकारः कृष्णवर्णीयः कोदण्डः उपविष्टः आसीत्। तस्य पार्श्वे ज्वलताम् अङ्गाराणां मध्ये अयःशलाका, लवित्रम्, परशुः इत्यादयः आसन्।

एतत् दृश्यं दृष्ट्वा शिवरामः चिन्तितवान् यत् अहं मरणं प्राप्य नरकम् आगतवान् अस्मि इति। अतः सः भीत्या उच्चैः आक्रोशनं कृतवान्।

लोहकारः कोदण्डः झटिति शिवरामस्य समीपम् आगत्य आक्रोशनस्य कारणं प्रष्टुम् उद्युक्तः। तं यमदूतं मन्यमानः शिवरामः इतोऽपि भीतः।



भयात् उत्थाय उपविश्य नमस्कारं कुर्वन् सः कोदण्डं पृष्टवान्– "मां किमर्थम् अत्र आनीतवान् भवान्?" इति।

एतत् दृष्ट्वा कोदण्डः चिन्तितवान् यत् एषः हस्तौ बद्ध्वा कृतज्ञतां प्रकटयन् अस्ति इति। अतः सः– "नमस्कारस्य का आवश्यकता? अहं मम कर्तव्यपालनं कृतवान्, तावदेव" इति उक्त्वा पुनः अपि अग्निसमीपं गतवान्। अग्नौ स्थिताम् अयःशलाकां उन्नीय परीक्षितुम् आरब्धवान् च।

तप्तायःशलाकां दृष्ट्वा शिवरामः चिन्तितवान् यत् एषः यमदूतः इदानीम् तप्तायःशलाकया मां दहति इति। अतः सः भीत्या कम्पमानः उच्चस्वरेण विलपितुम् आरब्धवान्– "भोः! तप्तायःशलाकया मां न दहतु। मया किमपि पापं न आचरितम्। मां न पीडयतु कृपया" इति।

शिवरामस्य आक्रन्दनं विलपनं च श्रुत्वा मार्गे गच्छन्तः जनाः लोहशालायाः पुरतः सम्मिलितवन्तः। सर्वेषां मुखतः प्रश्नाः– "किम्? किं प्रवृत्तम्?" इति।

तदा कोदण्डः तान् उद्दिश्य उक्तवान्– "एषः महानुभावः कः इति अहं तु न जानामि। मार्गे मूर्च्छया पतितम् एतम् अत्र आनीय उपचरितवान्। चेतनतां प्राप्य एषः यमलोकं प्रविष्टवान् इव भ्रान्त्या 'मां तप्तायःशलाकया न दहतु' इति उच्चैः आक्रोशनं कुर्वन् अस्ति" इति।

तत्समये केशवः शिवरामम् अन्विष्यन्



तत्र आगतवान्। सः लोहकारं कोदण्डम् उक्तवान्– "भोः, आतपकारणतः पित्थविकारेण एषः एवं जल्पति इति भाति। भवान् अन्यथा न चिन्तयतु। एषः मम स्नेहितः। आवां वाणिज्यनिमित्तं नगरम् आगतवन्तौ" इति।

एतत्सर्वं श्रुत्वा जनाः हसन्तः एकैकशः ततः निर्गतवन्तः। जनानां निर्गमनानन्तरम् एतौ कोदण्डाय कृतज्ञतां समर्प्य स्वग्रामं प्रति प्रस्थितवन्तौ।

मार्गे गच्छन् शिवरामः केशवम् उक्तवान्– "मित्र! स्वर्गनरकादिषु मम विश्वासः सर्वथा नास्ति। तथापि अहं लोहकारं कोदण्डं यमदूतं मन्यमानः, ज्वलतः अङ्गारान्, तप्तायःशलाकां च दृष्ट्वा यमलोकभ्रान्त्या किमर्थं तथा भीतः? किं मयि पापभीतिः सुप्ता आसीत् वा?" इति।

"शिवराम! कुकार्याणि कृतानि चेत् पापसञ्चयः भवति इति भावना सर्वेषु भवति एव। केषाञ्चित् मनसि सा जागरिता, पुनः केषाञ्चित् मनसि सा सुप्ता। दुर्मिश्रणादिकं कुर्वतः भवतः मनसि अपि तादृशी पापभीतिः सुप्ता आसीत् एव। अतः नरकं प्रविष्टवान् इति भावना भवतः मनसि आगता। मनसः वास्तविकं रूपं प्रकटितम् अभवत्" इति उक्तवान् केशवः।

आलोचनायां मग्नः शिवरामः अङ्गीकारपूर्वकम् उक्तवान्– "भवतः वचनं सत्यम् एव स्यात्" इति।

"एतत् तु सत्यं यत् मरणानन्तरं कः कुत्र गच्छति इति कोऽपि स्वयं न दृष्टवान् इति। पापनरकादीनां भीत्या पुण्यसम्पादनेच्छया च जनाः लोके सम्यक् व्यवहरन्ति। पापपुण्यादीनां कल्पनातः सत्फलं तु अस्ति एव। केचन तु भ्रान्तिवशात् नरकादिफलम् अत्रैव अनुभवन्ति" इति उक्तवान् केशवः।

केशवस्य वचनेषु युक्ततां पश्यन् शिवरामः अनन्तरकाले न्यायमार्गेण वाणिज्यं कुर्वन् सज्जनः इति कीर्तिं सम्पादितवान्।





# अनुभवबलम्

शिवगिरौ श्रीदत्तनामकः साधुस्वभावयुतः राजा आसीत्। यदा राजसभा भवति तदा सः अतीव खिन्नः भवति। महत्या शिरोवेदनया सः पीडितः भवति स्म। तत्र कारणं तु आस्थानपण्डितः अनिरुद्धः।

अनिरुद्धः शुष्कैः श्लोकैः निरर्थकतर्केण, व्यर्थ-कथनेन न केवलं महाराजं, सभ्यान् सर्वान् अपि उद्वेजयति। तदीयाः पिताप्रपितामहादयः आस्थानपण्डितपदवीम् अलङ्कृतवन्तः आसन्। अतः राजा अनिरुद्धम् अप्रियं कथयितुं न शक्नोति।

एकदा गौरीदत्तः नाम निर्धनः ब्राह्मणः महाराजस्य दर्शनं प्राप्य उक्तवान्- ''महाप्रभो! पुरोहितवृत्त्या जीवन् अहं पत्नीपुत्रादीन् पोषयामि। दारिद्र्यात् अहं कदापि न खिन्नः। किन्तु इदानीं विचित्रा परिस्थितिः उत्पन्ना मम गृहे'' इति।

तदा राजा पृष्टवान्- ''कीदृशी समस्या सा?'' इति।

गौरीदत्तः उक्तवान्- ''समस्या अल्पा एव, किन्तु परिणामः तु घोरः। मम षड्वर्षीयः कश्चन बालः अस्ति। प्रातः आरभ्य शयनपर्यन्तं तस्य रोदनम् एव कार्यम्। प्रतिदिनम् एतत् श्रुत्वा अहं निर्विण्णः संवृत्तः। सुदूरं पलायनं करोमि वा इति भाति मम'' इति।

गौरीदत्तस्य समस्यां श्रुत्वा राजा चिन्तितवान् यत् एषः बालकः अनिरुद्धस्य गले बद्धः चेत् समस्याद्वयम् अपि परिहृतं भविष्यति इति। अतः सः गौरीदत्तम् उक्तवान्- ''भवान् भवतः पुत्रम् अत्र आनयतु। सः यावत् मम अधीने स्थास्यति तावत् भवान् प्रतिदिनं दश सुवर्णनाणकानि प्राप्स्यति'' इति।



अतीव सन्तुष्टः गौरीदत्तः अनन्तरदिने एव स्वपुत्रं शङ्करं महाराजस्य अधीने दत्त्वा प्रतिगतवान्।

महाराजः अनिरुद्धम् आहूय उक्तवान्- "पण्डितवर्य! भवता मम साहाय्यं करणीयम्। एषः शङ्करः कश्चन अनाथः बालकः। एतं भवान् पालयतु। योग्यं शिक्षणं यच्छन् स्वसमानं पण्डितं करोतु" इति।

"महाराज! एतस्य रक्षणभारः मम उपरि भवतु। भवान् एव कालान्तरे वदेत् यत् अनिरुद्धस्य शिष्यः पाण्डित्येन गुरुम् अपि अतिशेते इति। समीचीनं शिक्षणम् अहं दास्यामि" इति उक्त्वा अनिरुद्धः बालं शङ्करं स्वगृहं नीतवान्।

गृहप्राप्तिसमनन्तरम् एव शङ्करस्य रोदनम् आरब्धम्। बहुधा प्रयत्नेन अपि बालस्य रोदनं स्थगयितुं न शक्नोति अनिरुद्धः। एतस्मिन् प्रयत्ने व्यग्रः सः अनन्तरदिने राजसभाम् आगन्तुम् अपि न शक्तवान्। तद्दिने राजसभायाः कलापाः सम्यक् प्रवृत्ताः। राजा सभ्याः च तुष्टाः आसन्।

अनन्तरदिने अपि एवम् एव प्रवृत्तम्। उत्थानसमनन्तरम् एव शङ्करस्य रोदनम् आरब्धम्। ताडनेन द्विगुणितं भवति, लालनेन तु शान्तं न भवति। अतः एतद्दिने अपि अनिरुद्धः राजसभां न गतवान्।

एवम् एव सप्ताहं यावत् प्रवृत्तम्। राज्ञा दत्तं कार्यं निर्वोढुं न शक्नोति अनिरुद्धः। 'न शक्नोमि' इति वक्तुम् अभिमानवशात् सङ्कोचः। अतः सः कमपि अनुक्त्वा राजधानीं त्यक्त्वा गतवान्।

एवम् अनुरुद्धविषयिणी समस्या तु परिहृता। किन्तु अल्पे एव काले अन्या महती समस्या उपस्थिता।

शिवगिरेः उत्तरेण सुन्दराचलं नाम सुविशालं राज्यम् अस्ति। तत्र प्रतिवर्षम् अपि क्षत्रियोचितानां विद्यानां प्रदर्शनं स्पर्धा च प्रचलति। तस्यां स्पर्धायां भागं ग्रहीतुं श्रीदत्तस्य पुत्रौ गौरवदत्तः सौरभदत्तः च गतवन्तौ। किन्तु तौ कौशलं प्रदर्श्य अपि प्रथमादिस्थानं प्राप्तुं न शक्तवन्तौ। सुन्दराचलस्य युवराजः प्रद्युम्नसिंहः एव

अत्यधिकस्पर्धासु प्राथम्यं प्राप्तवान्।

एतेन उद्विग्नौ गौरवदत्तः सौरभदत्तः च सुन्दराचलस्य राज्ञः प्रसेनवर्मणः उपरि स्वजनपक्षपातम् आरोपितवन्तौ। स्पर्धासु महती वञ्चना इति उद्घेषितवन्तौ च। शिवगिरिराजकुमारयोः एतम् आरोपं श्रुत्वा प्रसेनवर्मा नितरां क्रुद्धः। क्रोधवशात् शिवगिरेः उपरि आक्रमणम् उद्घोषितवान् च।

इदानीं श्रीदस्य पुरतः महती समस्या। एतस्मात् अपायतः मोक्षं प्राप्तुं कः उपायः इति सः सगम्भीरं चिन्तयन् अस्ति। शिवगिरेः अपेक्षया सुन्दराचलं तु त्रिगुणितं विशालम्। अन्यच्च सुन्दराचलस्य नद्यः एव शिवगिरेः जनानाम् जीवनाधारः। अतः सुन्दराचलेन सह युद्धं नाम पराजयप्राप्तिः एव। अकस्मात् जये प्राप्ते अपि क्षामः अङ्गीकरणीयः।

राजा प्रजाप्रमुखानां सभाम् आहूय उपस्थितां समस्याम् उपस्थापितवान्। उपस्थितेषु एकैकः अपि स्वमत्यनुगुणम् एकं परिहारं सूचयति। तेषु एकः अपि व्यावहारिकः न आसीत्।

एतां वार्तां गौरीदत्तः अपि श्रुतवान्। महाराजस्य साहाय्यं करणीयम् इति बुद्ध्या सः राजसमीपम् आगतवान्।

साहाय्यकरणबुद्ध्या उपस्थितं गौरीदत्तं पृष्टवान् महाराजः- "भवत्कारणतः



अनिरुद्धस्य पीडा अपगता इति तु सत्यम् एव। किन्तु इदानीम् उपस्थिता तु शासनसम्बन्धिनी समस्या। भवान् अत्र कीदृशं साहाय्यं कर्तुं शक्नुयात्?" इति।

"महाराज! एषा शासनसम्बन्धिनी समस्या, अहं शासनव्यवहारे अप्रवीणः इति उभयम् अपि सत्यम् एव। किन्तु एतादृश्यः एव समस्याः मम गृहे लघुरूपेण तदा तदा आगच्छन्ति। तदा अहं ताः अन्यसाहाय्यं विना एव परिहरामि" इति उक्तवान् गौरिदत्तः।

"तत् कथम्?" इति पृष्टवान् राजा श्रीदत्तः।

"महाराज! मम पुत्राः क्रीडासमये तदा तदा कमपि विवादम् उत्पादयन्ति। तेन क्रुद्धाः इतरबालकानां मातापितरः यदा मम गृहम्

आगच्छन्ति तदा अहं न विवादं करोमि, न वा उद्विग्नः भवामि। शान्तः सन् विनयेन तान् विवेकं बोधयन् स्नेहेन विवादजनकपरिस्थितिं निवारयामि। भवतः समस्या अपि एतादृशी एव खलु?" इति उक्तवान् गौरीदत्तः।

राजा श्रीदत्तः गौरीदत्तस्य वचनस्य तत्त्वं ज्ञातवान्। अनन्तरदिने एव सः सुन्दराचलदेशं गत्वा प्रसेनवर्माणं उक्तवान् "अप्रबुद्धौ मम पुत्रौ किमपि उक्तवन्तौ स्याताम्। तदर्थं तयोः पिता अहं क्षमायाचनार्थम् उपस्थितः अस्मि। भवान् तु मम अग्रजतुल्यः। अग्रजेन सः कः वा युद्धं करोति? अथवा भवान् एव स्वयं युद्धार्थम् आगच्छति इत्येव चिन्तयेम, तदा अपि अहं प्रतिभटनं न करिष्यामि एव " इति।

श्रीदत्तस्य विनयेन वचनेन च राजा प्रसेनवर्मा सन्तुष्टः जातः। युद्धविचारं परित्यक्तवान् अपि।

एवम् एव कानिचन वर्षाणि अतीतानि।

राजा श्रीदत्तः 'राज्यभारं पुत्रयोः अन्यतराय दत्त्वा निवृत्तजीवनं यापनीयम्' इति निश्चितवान्। किन्तु कस्मै राज्यं दातव्यम् इति समस्या।

एतस्याः समस्यायाः परिहारार्थं महाराजः गौरीदत्तं स्वसमीपम् आनायितवान्।

गौरीदत्तः महाराजस्य समस्यां श्रुत्वा उक्तवान्– "प्रभो! भवतः समस्यां श्रुतवतः मम नेत्रयोः पुरतः मिष्टखाद्यार्थं विवादं कुर्वतां मम पुत्राणां चित्रम् आगच्छति। यदा गृहं प्रति मिष्टखाद्यं नयामि तदा ते विवदन्ति। अतः अहं गृहप्राप्तितः पूर्वम् एव यावन्तः पुत्राः तावत्सु बन्धेषु पृथक् बद्ध्वा मिष्टखा द्यं नयामि" इति।

मिष्टखाद्यवितरणस्य पृष्ठतः स्थितां नीतिं ज्ञातवान् महाराजः। अतः सः शिवगिरिं द्विधा विभज्य एकैकस्मिन् भागे एकैकं पुत्रम् प्रतिष्ठापितवान्। विशेषपारितोषिकेण गौरीदत्तं सम्मान्य तदीयं दारिद्र्यं निवारितवान् च।



# ज्वालाद्वीपः

## (१८)

[ साहाय्यार्थम् अवश्यम् आगन्तव्यम् इति वार्ता ज्वालाद्वीपस्थः उग्रदत्तः उग्राक्षाय प्रेषितवान्। वार्ताप्राप्तिसमनन्तरम् एव उग्राक्षः अनुचरैः राक्षसैः सह समुद्रमार्गेण ज्वालाद्वीपं प्रति प्रस्थितवान्। समुद्रे प्रयाणं कुर्वन्तः यदा ते समुद्रस्य मध्यभागं प्राप्तवन्तः तदा भयङ्करपक्षी कश्चन तान् उद्दिश्य एव आगच्छत्। तदनन्तरम्......]

भयङ्करपक्षिणः आगमनं दृष्ट्वा सर्वे राक्षसाः अतीव भीताः। यतः ते तस्य पक्षिणः क्रूरतां स्वयं दृष्टवन्तः आसन्। तदा उग्राक्षः तेषु धैर्यं पूरयन् उक्तवान्– "रे मूर्खाः! किमर्थं भीतिः? अस्माकं दीपशिखाः तैलेन आर्द्रीकृत्य त्वरया ज्वालयन्तु" इति।

तदा राक्षसाः झटिति दीपशिखाः सज्जीकृत्य अग्निना ज्वालयित्वा उन्नीय गृहीतवन्तः।

भयङ्करपक्षिणः उपरि स्थिताः इदानीं किञ्चिदिव भीताः। किञ्चित्कालानन्तरं ते पक्षिणम् अधोमुखं प्रेरयन्तः नौकासमीपम् आगतवन्तः। किन्तु राक्षसानां तीव्रं प्रतिरोधं दृष्ट्वा निराशया पुनः अपि उपरि गतवन्तः। किञ्चित्कालं यावत् तत्रैव चक्राकारेण भ्रमन्तः अट्टहासं कृतवन्तः। अन्ते किमपि साधयितुम् असमर्थाः ज्वालाद्वीपं प्रति वेगेन गतवन्तः च।



राक्षसानां प्रयाणं निर्विघ्नम् अग्रे गतम्। ततः तृतीये दिने प्रातःकाले ते ज्वालाद्वीपसमीपं गतवन्तः। ज्वालाद्वीपः तु अर्थतः अपि ज्वालाभिः आक्रान्तः एव।

"उडुपान् पश्चिमदिशि किञ्चिद्दूरम् अग्रे नयन्तु। तत्र ज्वालाभिः आक्रान्तयोः अग्निपर्वतयोः मध्ये कश्चन खातप्रदेशः अस्ति। अस्माभिः तत्र प्रथमं गन्तव्यम्। अनन्तरं खातमार्गेण अस्माकं वसतिं प्राप्तुं शक्नुमः" इति उक्तवान् मार्गदर्शी भल्लूकचर्मधारी।

भल्लूकचर्मधारिणः सूचनानुसारं उडुपाः अग्रे गतवन्तः। अग्निपर्वतयोः मध्ये स्थितः खातप्रदेशः अपि प्राप्तः। खातस्य आरम्भे एव व्याघ्रचर्मधारिणां भल्लूकचर्मधारिणां च मध्ये युद्धं प्रचलत् आसीत्। भयङ्करपक्षिणः अपि अस्मिन् युद्धे भागग्राहिणः एव। ते उपरिष्टात् आगत्य भल्लूकचर्मधारिणाम् उपरि आक्रमणं कुर्वन्ति स्म।

अस्मिन् युद्धे भल्लूकचर्मधारिणाम् एव बलम् अधिकम् आसीत्। व्याघ्रचर्मधारिणः पराजयम् अनुभूय एकैकशः पलायनम् आरब्धवन्तः। भल्लूकचर्मधारिणः तु सम्मुखम् आगतं व्याघ्रचर्मधारिणं निर्दयं मारयन्तः अग्रे आगच्छन्तः आसन्।

राक्षसाः उडुपेभ्यः अवतीर्य तीरं प्राप्तवन्तः। विजयिनः भल्लूकचर्मधारिणः राक्षसानां स्वागतार्थम् उत्साहेन आगतवन्तः। तेषां सर्वेषाम् अग्रे स्थितं दृष्ट्वा आश्चर्यचकितः उग्राक्षः– "किं भोः उग्रदत्त! कः अयं भवतः वेषः?" इति पृष्टवान्। उग्रदत्तं हस्ताभ्यां लीलया उन्नीय स्कन्धस्य उपरि उपवेश्य आनन्दपुलकितः सन् नृत्यति स्म इव सः।

उग्रदत्तः अल्पैः शब्दैः शत्रुपक्षस्य बलाबलं निवेद्य भल्लूकचर्मधारिणां नायकस्य कन्धस्य परिचयम् उक्त्वा– "एषः महानायकः एव मां व्याघ्रचर्मधारिभ्यः रक्षितवान्" इति निवेदितवान्।

कन्धः राक्षसराजम् उग्राक्षं विनयेन प्रणम्य उक्तवान्– "उग्राक्ष! भवताम् आगमनेन वयम् उज्जीविताः। अन्धकारमयगुहासु वासः एतावता समाप्तः इति अहं चिन्तयामि।

एकपादसदृशः महाक्रूरी जगति अन्यः कोऽपि नास्ति। कुटिलोपायेन सः जगतः एवं आधिपत्यं प्राप्तुम् इच्छति। अतः न केवलम् एकपादः, तस्य साहाय्यकौ करवीरः नागवर्मा च नाशनीयौ। तदा एव अस्माकं भवतः देशस्य च हितम्। भवदागमनानन्तरं कार्यसिद्धौ मम सन्देहः एव न अवशिष्टः'' इति।

''वयं तु उपस्थिताः खलु? इतःपरं किमर्थं विलम्बः? गत्वा एकपादस्य दुर्गस्य उपरि आक्रमणं करवाम। भवान् मार्गं प्रदर्शयतु तावत् इति उत्साहेन वदन् उग्राक्षः उग्रदत्तम् अधः अवतारितवान्।

''राक्षसेन्द्र! त्वरा मास्तु। एतत् कार्यं तथा सुलभतया न सिध्यति। एकपादस्य मारणविषये विशेषोपायः चिन्तनीयः। अन्यच्च तस्य वशे राजकुमारी चन्द्रलेखा अपि अस्ति। तस्याः अपायः यथा न स्यात् तथा जागरूकता अपि आश्रयणीया। अन्या अपि काचित् खेदस्य वार्ता यत् तेषां बन्धने स्थितः अरुद्रः इदानीं तेषां साहाय्यं कुर्वन् अस्ति इति। भवतः पालितपुत्रे अरुद्रे एतादृशं परिवर्तनं कथं जातम् इति अहं तु न जानामि'' इति उक्तवान् कन्धः।

''किम्? किं वदति भवान्? अरुद्रः शत्रुपक्षं प्रविष्टः इति? उग्रदत्तस्य प्रियसहचरः सः विश्वासद्रोहम् आचरन् अस्ति इति? कथम् एतत्सर्वं सम्भवेत्?'' इति वदन् उग्राक्षः




उच्चैः आहूतवान्– ''रुद्रऽऽ! रे रुद्रऽऽ!'' इति।

समीपे एव स्थितः रुद्रः त्वरया धावन् आगत्य– ''उपस्थितोऽस्मि उग्राक्षराज!'' इति उक्त्वा उग्राक्षं विनयेन नमस्कृतवान्।

''रे रुद्र! अरुद्रः कथं तथा द्रोही संवृत्तः? भवान् तस्य आत्मीयः सहचरः आसीत् खलु?'' इति रुद्रं पृष्टवान् उग्राक्षः।

''यथा सः मम आत्मीयः आसीत् तथैव उग्रदत्तस्य अपि आत्मीयः आसीत् एव। किन्तु स्वभावपरिवर्तनं कथं जातम् इति अहं कथं वक्तुं शक्नोमि? धनलोभात् तथा कृतवान् इति वक्तुं तु न शक्यते। यतः अस्मद्राज्ये ऐश्वर्यस्य का न्यूनता? स्त्रीलोभात् एवं भवितुम् अर्हति। चन्द्रलेखां




सः चिन्तापूर्णस्वरेण कन्धम् उक्तवान्– "मित्र! अश्रुतपूर्वा शक्तिः एषा। रक्तबिन्दुः यथा न पतेत् तथा एकपादस्य मारणं कथं वा शक्येत?" इति।

"एतत् तु निर्णायकं युद्धम्। प्राणापायम् अपि अविगणय्य युद्धं करणीयं भवति अत्र। दुर्गप्रवेशः कष्टदायकः न। अस्माकं समीपे अपि सुशिक्षिताः भयङ्करपक्षिणः सन्ति। अत्र शत्रूणां सम्मुखीकरणे न तथा क्लेशः। भवदीयेषु राक्षसेषु एकैकः अपि शतं व्याघ्रचर्मधारिणः मारयितुं समर्थः। सैन्यबलं तु अस्माकम् एव अधिकम्। एकपादस्य निवारणं केवलं समस्या। अस्माकं पुरतः सः कथञ्चित् आगत्य खड्गेन स्वशरीरे व्रणम् उत्पादयति चेत् अस्मदीयाः सर्वे मक्षिकाः इव मृताः भवेयुः" इति उक्तवान् कन्धः।

"किं तस्य एकपादस्य शरीरशक्तिः अपि महती अस्ति वा?" इति पृष्टवान् उग्राक्षः।

"शरीरशक्तिः? सर्वथा नास्ति तस्य। आकारेण बालः इव सः। पङ्गुः अपि! अतः दशवर्षीयः कश्चन बालः अपि तं कुत्रापि पातयितुं शक्नोति" इति उक्तवान् कन्धः।

"एवं तर्हि मम मनसि कश्चन उपायः स्फुरति। मम अनुचराः तु प्राणान् अर्पयितुं सदा सिद्धाः। अतः दुर्गस्य वशीकरणानन्तरं मम अनुचरेषु एकः एकपादम् अन्विष्यन् अग्रे गच्छतु। वयं सर्वे शिरः अवनमय्य तम् अनुसरेम। यदा एकपादः लभ्यते तदा सः

परिणेतुम् इच्छन् सः तथा कृतवान् स्यात् अपि" इति उक्तवान् रुद्रः।

"चन्द्रलेखां सः कथं परिणयेत्? सा तु उग्रदत्ताय मया मनसि निश्चिता वधूः। सा मम स्नुषा भवेत् एव। यथाकथं वा अस्तु। सः अरुद्रः मत्पुरतः आगच्छतु नाम। तं खण्डशः कृत्वा भूतेभ्यः बलिम् अर्पयिष्यामि" इति कोपेन उक्तवान् उग्राक्षः।

"मित्रवर्य! शान्तः भवतु। अस्माकं सद्यःकालीनं लक्ष्यं तु एकपादस्य मारणम्। भवान् एतं विषयं जानाति वा न वा इति न जाने, एकपादः यस्य रक्तं पश्यति, एकपादस्य रक्तं यश्च पश्यति तौ उभौ अपि तत्क्षणे मरणं प्राप्नुतः" इति निराशाभावेन उक्तवान् कन्धः।



अस्मान् सूचयिष्यति। वयं सर्वे परितः आक्रम्य तं नाशयिष्यामः। एतत्सन्दर्भे द्वित्राणां प्राणाः गच्छेयुः नाम" इति उत्साहेन उक्तवान् उग्राक्षः।

"शिरः अवनमय्य गच्छेम चेदपि तदीयरक्तस्य दर्शनं तु कदाचित् भवितुम् अर्हति खलु?" इति सन्देहं प्रकटितवान् कन्धः।

"इदानीं कथञ्चित् एकः मार्गः चिन्तितः। एषः उपायः यदि विफलः स्यात् तर्हि तत्समये समयस्फूर्त्या किमपि चिन्तयिष्यामः। कार्ये आरब्धे सर्वं स्फुरति एव। गच्छाम तस्य दुर्गं प्रति" इति वदन् उग्राक्षः उत्साहेन उत्थितवान्। इतरे तम् अनुसृतवन्तः।

भल्लूकचर्मधारिणः मार्गं प्रदर्शयन्तः अग्रे गतवन्तः। खातमार्गेण किञ्चिद्दूरं गत्वा वामतः स्थिते पर्वते सर्पाकारेण प्रसृते मार्गे ते शिखरस्थं दुर्गम् उद्दिश्य गतवन्तः। आकाशे कुत्रापि भयङ्करपक्षिणां दर्शनं नास्ति। पर्वते अपि व्याघ्रचर्मधारिणां दर्शनं नास्ति! समग्रः प्रदेशः शान्तः निर्मानुषः च आसीत्।

"एकपादेन किमपि तन्त्रम् आयोजितम् इति भाति। विरोधः तेन उद्देशपूर्वकं निवारितः, येन अत्र कुत्रापि एकः अपि शत्रुः न दृश्यते। यदा वयं दुर्गसमीपं गच्छेम तदा स्वरक्तं प्रदर्श्य वयं मारणीयाः इति एकपादस्य योजना स्यात्" इति स्वाशयं प्रकटितवान् कन्धः।

"एवं तर्हि अग्रे गन्तारं विना कोऽपि दुर्गं न पश्यतु" इति आज्ञापितवान् उग्राक्षः।

एवं रीत्या सर्वे दुर्गसमीपम् आगतवन्तः। दुर्गभित्तेः उपरि तदा तदा शब्दः श्रूयते। तथापि उग्राक्षस्य आज्ञानुसारं सर्वे भूमिं पश्यन्तः स्थितवन्तः।

अत्रान्तरे उच्चस्वरीयः एकपादस्य कण्ठध्वनिः उपरिष्टात् श्रुतः– "भो भोः, अत्र पश्यन्तु! सुदर्शराजस्य पुत्रीं चन्द्रलेखाम् इदानीम् अधः पातयिष्यामिऽऽ" इति।

एकपादस्य वचनं समाप्तम्। क्षणकालं सर्वत्र मौनम्। केनापि शिरः उन्नीय न दृष्टम्। किन्तु सर्वेषां मनसि आतङ्कः तु आसीत् एव।

अत्रान्तरे दुर्गभित्तेः उपरि– "वञ्चना! द्रोहः! विश्वासद्रोहः!" इति कोलाहलः श्रुतः।



कूर्दितवती।

उग्राक्षः उग्रदत्तः च क्षणमात्रेण चन्द्रलेखया प्रेषितायाः रज्जोः आधारेण उपरि गतवन्तौ। सा रज्जुः दृढतया बद्धा आसीत्। राक्षसानां भारम् अपि सोढुं शक्ता आसीत् सा रज्जुः।

तौ दुर्गस्य अन्तर्भागं प्रविष्टवन्तौ। तत्र करवीरेण सह अरुद्रः, नागवर्मणा सह चन्द्रलेखा च युद्धरतौ आस्ताम्। घोरं युद्धम् आसीत् तत्।

उग्राक्षः एतत् दृश्यं दृष्ट्वा आवेशेन– "साधु वीराङ्गने! साधु! चन्द्रलेखे! भीतिः मास्तु। साहाय्यार्थम् एषः अहम् आगच्छामि। भवती स्वक्षत्रियकुलोत्पन्नत्वं सार्थकं कृतवती। भवती आत्मनः कुसुमकोमलत्वं वज्रकठोरत्वं च प्रदर्शितवती। इतःपरं भवत्याः खड्गस्य विश्रान्तिः भवतु। यतः मम प्रहारस्य अपि रुचिम् अयं वराकः किञ्चित् पश्यतु" इति वदन् शिलामयीं गदां प्रहारार्थम् उन्नीतवान्। किन्तु गदापाततः पूर्वम् एव चन्द्रलेखायाः तीक्ष्णः खड्गः नागवर्मणः वक्षस्थलं प्राविशत्।

नागवर्मा "होऽऽ" इति आक्रन्दनं कुर्वन् अधः पतितवान्। राक्षसान् दृष्ट्वा पलायनं कर्तुम् उद्युक्तस्य नागवर्मणः पृष्ठे अरुद्रस्य खड्गः अपतत्। नागवर्मा "मातः!" इति आक्रन्दनं कुर्वन् अधः पतितवान्।

कन्धः महता उत्साहेन गत्वा एकपादः

"उग्रदत्त! चन्द्रलेखया अधः प्रेषितायाः रज्जोः साहाय्येन सर्वे उपरि आगच्छन्तु। एकपादं चर्मणः स्यूते बद्धवान् अस्मि। अतः तस्मात् भीतिः मास्तु। किन्तु, द्रोही नागवर्मा करवीरः च कुत्रापि पलायितवन्तौ। अतः तयोः अन्वेषणं मारणं च अस्माकं प्रथमकर्तव्यम्" इति उच्चस्वरेण उपरिष्टात् उक्तवान् अरुद्रः।

तस्मिन् एव क्षणे खड्गानां खणखणत्कारः अपि आरब्धः। चन्द्रलेखा एकेन हस्तेन खड्गम् उन्नीय दुर्गभित्तौ स्थित्वा– "त्वरया रज्जोः साहाय्येन उपरि आगच्छन्तु। अरुद्रकरवीरयोः युद्धं प्रचलति। अहो! द्रोही नागवर्मा अपि अत्र उपस्थितः" इति उच्चस्वरेण वदन्ती दुर्गस्य अन्तर्भागे

यस्मिन् चमस्यूते अस्ति तम् उन्नीय– ''अये! एकपाद! अन्तः सुखेन अस्ति खलु? इदानीं भवन्तम् अग्निज्वालायाः मध्ये पातयामि। तेन भवतः अपि मुक्तिः, लोकस्य अपि हितम्'' इति वदन् अग्निपर्वतम् उद्दिश्य गतवान्।

अरुद्रः उग्राक्षादीन् पश्यन् उक्तवान्– ''मया विश्वासद्रोहिणा इव यत् आचरितं तेनैव एतत्कार्यं सिद्धम्। एकपादः मयि विश्वसितवान्। 'चन्द्रलेखा प्राणापाये अस्ति इति भवतः सर्वान् भाषयित्वा यदा भवन्तः उपरि पश्यन्ति तदा स्वशरीरे व्रणम् उत्पाद्य रक्तं प्रदर्श्य भवन्तः मारणीयाः' इति तस्य योजना आसीत्। यदा सः एतस्मिन् प्रयत्ने उद्युक्तः आसीत् तदा अहं समयं संसाध्य चर्मस्यूतं तदुपरि क्षिप्त्वा तं स्यूते बद्धवान्। दैवानुग्रहबलात् मम उपायः फलितः'' इति।

अरुद्रस्य चातुर्यं, धैर्यं, साहसं च सर्वे प्रशंसितवन्तः।

* * * *

उग्राक्षः उग्रदत्तेन सह इतरपरिवारबन्धुभिश्च सह स्वराज्यं प्रतिगतवान्। चन्द्रलेखा अपि स्वराज्यं प्रापिता। सन्तोषमये एतस्मिन् सन्दर्भे उग्रदत्त-चन्द्रलेखयोः विवाहप्रस्तावः आगतः। विवाहः अपि निश्चितः। चित्रसेनः सुदर्शनराजः च परमसन्तुष्टौ जातौ। अनन्तरं शुभे मुहूर्ते उग्रदत्त-चन्द्रलेखयोः विवाहः सवैभवं सम्पन्नः।

ज्वालाद्वीपस्य नायकः कन्धः विवाहदिने उपस्थितः सन् अपरिमितम् ऐश्वर्यम् उपायनरूपेण दत्तवान्। कन्ध-चित्रसेनयोः मध्ये गाढा मैत्री स्थापिता अभवत्।

इदानीम् उग्रदत्तः उग्राक्षस्य अरण्यराज्यस्य श्वशुरस्य सुदर्शनस्य राज्यस्य अपि प्रभुः। एवं विशालप्रदेशस्य शासकः सन् सः सर्वे यथा तृप्ताः भवेयुः तथा राज्यशासनं कृतवान्। उत्तमां कीर्तिम् अपि सम्पादितवान्।

(समाप्तम्)






# राज्यरक्षणम्

आयासस्य स्वरूपम् एव अजानन् इव त्रिविक्रमः पुनः पुनः असाफल्यम् अनुभवन् अपि पुनः वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शवम् अधः अवतार्य स्कन्धे आरोप्य यथापूर्वं श्मशानम् उद्दिश्य गन्तुम् आरब्धवान्। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्, अन्यैः कल्पयितुम् अपि अशक्ये अपायकरे कार्ये भवान् यत् उद्युक्तः तत्र कारणं किम् इति अहं सर्वथा न जानामि। भवादृशाः एव केचन राजकुमाराः मम स्मृतिपथम् आगच्छन्ति। तादृशेषु अन्यतमस्य शिवदत्तनामकस्य राजकुमारस्य कथां श्रावयामि। श्रद्धया कथां शृण्वन् गच्छति चेत् भवान् मार्गायासम् एव ज्ञातुं न शक्नोति" इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं नीलसागरराज्ये अग्निदत्तः नाम राजा आसीत्। तस्य शासने राज्ये सर्वत्र समृद्धिः

वेतालकथा



आसीत्। जनाः सुखेन आसन्।

अग्निदत्तस्य शिवदत्तः शान्तिदत्तः च इति द्वौ पुत्रौ। एतौ सहोदरौ सर्वासु विद्यासु अपि निपुणौ। शिवदत्तः शान्तिदत्तापेक्षया अपि अधिकं विनयशीलः शान्तः च। अतः एव सर्वेषाम् अपि शिवदत्ते विशेषाभिमानः। 'शिवदत्तः राज्यपालने मम साहाय्यं कुर्यात्' इति महाराजस्य अपि विशेषनिरीक्षा आसीत्। किन्तु शिवदत्तः वेदाध्ययनं कुर्वन्, पुराणादिकं पठन्, भगवद्ध्यानतत्परः सन् कालं यापयति स्म।

एवं स्थिते कदाचित् अग्निदत्तराजः निश्चितवान् यत् शिवदत्तं युवराजपदे अभिषिच्य राज्यरक्षणकार्ये तदीयं साहाय्यं स्वीकरणीयम् इति।

एवं चिन्तनस्य कारणम् अपि आसीत्। प्रतिवेशी राजा पालकः नीलसागरराज्यं आक्रम्य वशीकरणीयम् इति चिन्तयन् आसीत्। एतदर्थं सः युद्धसिद्धतां कुर्वन् अस्ति इत्यपि वार्ता गूढचरद्वारा श्रुता आसीत्। एतस्य आक्रमणस्य सम्मुखीकरणार्थं शक्तिः वर्धनीया आसीत्।

अग्निदत्तराजस्य आदेशानुगुणं मन्त्री शिवदत्तसमीपं गत्वा परिस्थितिं समग्रतया निवेदितवान्। युवराजपदवीप्राप्तिं श्रुत्वा सन्तोषप्रकटनं दूरे तिष्ठतु, 'राज्यशासनव्यवहारे मम आसक्तिः सर्वथा नास्ति' इति सुस्पष्टम् उक्तवान् शिवदत्तः।

तदा आश्चर्यं प्रकटयन् मन्त्री उक्तवान्– "राजकुमार! भवान् एतादृशम् उत्तरं वदेत् इति मम कल्पना अपि न आसीत्। सर्वे नागरिकाः भवतः यौवराज्याभिषेकस्य सुदिनं प्रतीक्षमाणाः सन्ति" इति।

"किमर्थं वृथा अनुरोधः? तत्र मम आसक्तिः नास्ति इति अहं सुस्पष्टम् उक्तवान् अस्मि खलु?" इति उक्तवान् शिवदत्तः।

"भवान् इदानीं युवराजपदवीं निराकृतवान् इति वार्ता प्रसृता चेत् प्रजाः असन्तुष्टाः भवन्ति। शत्रुपक्षीयानां तु एतेन महान् लाभः। समग्रस्य देशस्य भविष्यम् भवतः हस्ते अस्ति" इति उक्तवान् मन्त्री।

"राज्यस्य हिताहितं चिन्तयितुं समर्थः महाराजः अस्ति, भवान् अपि अस्ति। अनुजं

युवराजपदव्यां स्थापयन्तु। पुनः एतद्विषये चर्चा मास्तु" इति उत्तरितवान् शिवदत्तः।

मन्त्री महाराजसमीपं गत्वा प्रवृत्तं समग्रं निवेदितवान्। अग्निदत्तः शिवदत्तं समीपम् आहूय– "भवान् मन्त्रिणः समीपे यत् उक्तवान् तत् ज्ञातवान् अहम्। राज्यस्य हितं भवता मनसि स्थापनीयम्। प्रजासु आत्मविश्वासं, सैनिकेषु धैर्यं च पूरयितुं भवता युवराजपदवी अङ्गीकरणीया। ज्येष्ठपुत्रेण एव खलु युवराजपदम् अलङ्करणीयम्? अन्यच्च कः युवराजः भवेत् इत्यत्र महाराजस्य मम एव अन्तिमनिर्णयः। अहम् इच्छामि – भवान् एव युवराजः भवतु इति। पट्टाभिषेकस्य दिनं निश्चितम् अस्ति। मुहूर्तः अपि निश्चितः। सिद्धता अपि प्रचलति। अतः भवता इदानीम् असम्मतिः न प्रदर्शनीया" इति आज्ञास्वरेण उक्तवान्।

शिवदत्तः किमपि उत्तरम् अवदन् मौनं स्थितवान्। 'मौनं सम्मतिलक्षणम्' इति सर्वे भावितवन्तः।

किन्तु अपरस्मिन् दिने प्रातःकाले एव शिवदत्तः राजधानीतः दूरं गतः आसीत्। राजा शिवदत्तस्य अन्वेषणार्थं भटान् नियोजितवान्। शिवदत्तः सामान्यतः यत्र सञ्चरति तत्र सर्वत्र ते अन्विष्टवन्तः। राजभवनस्य पृष्ठतः स्थिते पर्वते, समीपस्थे नदीतीरे, राजभवनस्थे ग्रन्थालये, राजोद्याने – एवं सर्वत्र अन्विष्य राजकुमारम् अपश्यन्तः ते प्रत्यागतवन्तः।





देशे सर्वत्र अपि अन्वेषणं प्रवृत्तम्। तेनापि किमपि प्रयोजनं न प्राप्तम्। राजा चिन्ताक्रान्तः। राज्ञी तु रोदनं कुर्वती शय्याम् आश्रितवती।

केषाञ्चित् दिनानाम् अनन्तरं कश्चन भिक्षुकः शिवदत्तेन दत्तं पत्रम् आनीतवान्। पत्रे शिवदत्तः मातापितरौ उद्दिश्य एवं लिखितवान् आसीत्– "राजकुलोत्पन्नेन मया कीदृशं दायित्वं निर्वहणीयम् इति अहं जानामि। कर्तव्यापेक्षया अन्तरात्मप्रेरणा एव प्रबला। अन्तरात्मप्रेरणानुगुणम् अहं मातापित्रोः बान्धवानां च व्यामोहं परित्यज्य संन्यासं स्वीकृतवान् अस्मि" इति।

एतत् पत्रं पठित्वा शिवदत्तस्य मातापितरौ अतीव दुःखितौ। किन्तु शिवदत्तः कुत्र अस्ति इति न ज्ञायते खलु? 'कथमपि पुत्रः कुत्रापि कुशली अस्ति किल' इति मनःसमाधानं प्राप्तवन्तौ।

एवम् एव पञ्च वर्षाणि अतीतानि। अग्निदत्तराजः व्याधिग्रस्तः सन् शय्याम् आश्रितवान्। तत्समये तदीयः द्वितीयपुत्रः शान्तिदत्तः राज्यपालने पितुः साहाय्यम् आचरति स्म। पुनः पञ्चवर्षाणाम् अनन्तरं अग्निदत्तः दिवं गतः। शान्तिदत्तः एव नीलसागरराज्यस्य सिंहासनम् आरूढवान्।

शान्तिदत्तः यद्यपि गुणवान् तथापि राज्यपालने अदक्षः एव। दूरदर्शिता, प्रत्युत्पन्नमतित्वम् इत्यादयः तस्य न आसन्।

एकदा नीलसागरराज्ये भीकरः क्षामः आगतः। अदूरदर्शी शान्तिदत्तः युक्ते समये पार्श्वस्थदेशेभ्यः धान्यसङ्ग्रहं न कृतवान् आसीत्। अतः राज्ये लुण्ठनानि वञ्चनानि च विशेषतः प्रवृद्धानि।

सुसमयं प्रतीक्षमाणः सौराज्यपालकः नीलसागरस्य उपरि आक्रमणम् उद्घोषितवान्। एतत् श्रुत्वा प्रजाः दिग्भ्रान्ताः जाताः। देशे एकत्र अराजकता, अपरत्र भीतिः। अत्रान्तरे राजा शान्तिदत्तः अपि व्याधिग्रस्तः जातः।

राजमाता तु किङ्कर्तव्यतामूढा सती चिन्ताक्रान्ता जाता।

तदा मन्त्रिषु अन्यतमः उक्तवान्– "महाराज्ञि! अस्यां क्लिष्टपरिस्थितौ

राज्यरक्षकः एकः एव अस्ति। तस्य नाम अद्भुतेश्वरस्वामी। भवती एतस्य नाम श्रुतवती स्यात् अपि। तस्य आशीर्वादस्य बलम् अस्ति चेत् राज्यस्य काऽपि विपत्तिः न भविष्यति" इति।

अद्भुतेश्वरस्वामिनः नाम राजमाता अपि श्रुतवती आसीत्। केभ्यश्चित् वर्षेभ्यः पूर्वं काष्ठविक्रेतारः चन्दनवृक्षस्य अन्वेषणं कुर्वन्तः गहनारण्यं प्रविश्य चन्दनवृक्षस्य मूले स्थितं वल्मीकम् अपसारितवन्तः। तस्मात् वल्मीकात् एषः ज्ञानी उद्भूतः आसीत्।

अपूर्वां एतां घटनां दृष्ट्वा चकिताः ते काष्ठविक्रेतारः तम् अद्भुतेश्वरनाम्ना एव आहूतवन्तः। जनाः प्रवाहरूपेण तस्य दर्शनार्थम् आगन्तुम् आरब्धवन्तः। तस्य आशीर्वादबलतः बहूनां कष्टानि अपगतानि। तत्स्थाने आश्रमादयः अपि निर्मिताः अभवन्।

किं करणीयम् इति राजमाता यावत् चिन्तयन्ती आसीत् तावता गूढचराः वार्ताम् आनीतवन्तः यत् शत्रुसेना राज्यसीमासमीपे आगत्य स्थिता अस्ति इति। तदा राजमाता अविलम्बेन अद्भुतेश्वरस्वामिनः आश्रमं गतवती। अश्रूणि स्रावयन्ती देशस्य क्षामपरिस्थितिं शत्रुसैन्यदुराक्रमणं च निवेद्य उक्तवती– "अहं अनन्यगत्या भवन्तं शरणं गता अस्मि। नीलसागरदेशः भवता एव रक्षणीयः" इति।

सः सन्यासी क्षणकालम् आलोचनामग्नः सन् शान्तस्वरेण उक्तवान्– "मातः, भीतिः मास्तु। भवत्याः, देशस्य वा काऽपि हानिः न





सूचनाः दत्तवान्। राजाज्ञया सर्वत्र व्यवस्थासु जागरूकताम् आनीतवान्।

नीलसागरस्य सैन्ये इदानीं नवोत्साहः। ते शौर्येण युद्धं कुर्वन्तः सीमाम् अतिक्रम्य आगच्छन्तीं शत्रुसेनाम् अवरुध्य छिन्नविच्छिन्नाम् कृतवन्तः। 'अद्भुतेश्वरस्वामी जयतात्' इति घोषः सर्वत्र व्याप्तः।

अस्मिन् युद्धे सौराज्यपालकः पराजितः अभवत्। सौराज्यदेशश्च नीलसागरस्य शासनस्य अधीने आगतः।

दिनत्रयात्मके अवधौ एव एषः अपूर्वः विजयः साधितः आसीत्। राज्ये सर्वत्र जनैः विजयोत्सवः आचरितः।

भविष्यति'' इति।

एतावदेव न, सः राजधानीम् आगत्य सैनिकानां समावेशम् आयोज्य देशभक्तिविषये प्रभावितया उपन्यासं कृतवान्। देशार्थं प्राणत्यागः महते फलाय इति बोधयन् सैनिकेषु रणोत्साहं पूरितवान्। जनेषु अपि त्यागभावनाम् उद्बोधितवान्।

अनन्तरं राजप्रासादं गत्वा शय्याम् आश्रितवन्तं शान्तिदत्तं दृष्ट्वा– ''भवतः कोऽपि रोगः नास्ति। उत्तिष्ठतु, उत्साही भवतु'' इति उक्त्वा आशिषा अनुगृह्णन् तं स्पृष्टवान्। अपरस्मिन् क्षणे शान्तिदत्तः शयनात् उत्थाय चलितुं समर्थः जातः। अत्युत्साहेन पूर्णः सः सेनानायकम् आहूय रक्षणव्यवस्थाम् आद्यन्तं श्रुत्वा उपयुक्ताः

यदा राजमाता एकान्ते आसीत् तदा अद्भुतेश्वरस्वामी तत्र गत्वा साष्टाङ्गं प्रणम्य– ''मातः! इतः गमनार्थं सम्मतिः दातव्या'' इति प्रार्थितवान्।

राजमाता आनन्देन अश्रूणि स्रावयन्ती मन्दहासं प्रकटयन्ती च प्रीत्या ललाटे चुम्बित्वा उक्तवती– ''पुत्र! चिरं जीवतु। प्रज्ञावान् भवान् मम पुत्रः इति तु मम सौभाग्यम्। सदा लोकहितं कुर्वन् जन्मनः सार्थक्यं सम्पादयतु'' इति।

तद्दिने एव अद्भुतेश्वरस्वामी स्वनिवासस्थानम् अरण्यस्थम् आश्रमं प्रतिगतवान्।

वेतालः एवं कथां समाप्य अवदत्– ''अये,

राजन् ! सः अद्भुतेश्वरस्वामी एव शिवदत्तः इति भवता एतावता ज्ञातं स्यात् खलु? किन्तु मम अत्र केचन सन्देहाः सन्ति। यदा राजमाता आहूतवती तत्क्षणे एव सः राज्यरक्षणार्थम् आगतवान्, गमनार्थम् अनुमतिम् अपि पृच्छति। एषः एव खलु पूर्वम् एतत् नीलसागरराज्यं परित्यज्य अनुक्त्वा गतवान्? अन्यच्च सौराज्यदेशस्य स्वायत्तीकरणे असम्मतिम् अपि न प्रदर्शितवान्। एवं तर्हि तस्मिन् किं बन्धुव्यामोहः राज्यदाहः इत्यादयः पुनः उत्पन्नाः? एतेषां प्रश्नानां समाधानं जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "यदा ज्ञानोदयस्य कालः सन्निहितः भवति तदा परिवारस्य बान्धवानां देशस्य च त्यागः न अनुचितः। किन्तु सर्वसङ्गपरित्यागिनः अपि कर्मलेपः भवति एव। अतः एव सः लोकहितार्थं कार्यं करोति। यदा राजमाता स्वसमीपम् आगतवती तदा अद्भुतेश्वरस्वामी तां स्वमातृत्वेन न दृष्टवान्। राज्यस्य उत्तरदायिनीं स्त्रियं मत्वा देशरक्षणं स्वकर्तव्यं भावयन् च सः कार्योन्मुखः जातः। अन्या काचित् असहाया स्त्री साहाय्यम् अपेक्षते चेदपि सः कर्तव्यबुद्ध्या साहाय्यम् अकरिष्यत् एव। एवं साहाय्यदाने बन्धुव्यामोहः न कारणम्। लोकहितम् एव चिन्तयतः तस्य राज्यदाहः वा कुतः? सर्वसङ्गपरित्यागी राज्यं स्वीकृत्य किं वा कुर्यात्? सौराज्यपालकः दुष्टः। दुष्टस्य निग्रहः तत्कालोचितः आसीत्। अराजकतानिवारणदृष्ट्या नीलसागरस्य अधीने सौराज्यदेशः योजनीयः आसीत् एव। अतः सः तत्कार्ये असम्मतिं न प्रदर्शितवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः शवसहितम् अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# वेगस्य कारणम्

कश्चित् राजा कदाचित् राजसभायां पृष्टवान्- "प्राणिप्रपञ्चे अतिवेगेन कः धावति?" इति।

सभ्याः विविधानि उत्तराणि दत्तवन्तः। तेषु एकेन अपि महाराजः न सन्तुष्टः।

तदा विदूषकः उत्थाय उक्तवान्- "अहं यथा जानामि, वेगेन धावितव त्सु अहम् एव अग्रणीः। पूर्वं कदाचित् मया धावनसन्दर्भे हरिणाः, अश्वाः च पराजिताः" इति।

राजा कोपेन विदूषकं पश्यन् उक्तवान्- "भवन्तं कः पृष्टवान्? मया विनोदार्थम् अयं प्रश्नः न पृष्टः। विकत्थनेन किं प्रयोजनम्? वस्तुस्थितिः अपेक्षिता मम" इति।

"मया वस्तुस्थितिः एव निवेदिता। तत्समये तावता वेगेन धावने कारणम् अपि अस्ति" इति उक्तवान् विदूषकः।

"किं तत्?" इति महाराजेन पृष्टः विदूषकः उक्तवान्- "तत्सन्दर्भे उन्मत्तः शुनकः माम् अनुसृत्य धावन् आगतवान् आसीत्" इति।

तत् श्रुत्वा राजा सभ्याः च उच्चैः हसितवन्तः। तदा विदूषकः विनयेन विवरणं दत्तवान्- "प्राणिनां सहजः वेगः अन्यः। यदा भीतिः जायते तदा अन्यः एव वेगः। एतं विषयं महाराजः यदि न अङ्गीकुर्यात् तर्हि तत्र कारणं भीतिविषयकं महाराजस्य अज्ञानम् एव" इति।

सभ्याः हर्षोद्गारं प्रकटितवन्तः। महाराजः मन्दहासं प्रकटयन् विदूषकाय अमूल्यानि पारितोषिकाणि दत्तवान्।



अस्माकं देशस्य वैशिष्ट्यानि

# अजन्ता एल्लोरा च






अत्रत्येषु चित्रेषु अन्यतमाः बौद्धस्तूपाः स्तम्भाः च प्रायः क्रि.श. षष्ठे सप्तमे वा शतके निर्मिताः।

एतासु गुहासु स्थितानि चित्राणि न केवलं बौद्धमतसिद्धान्तं प्रतिपादयन्ति, अपि तु प्राचीनस्य सामाजिकजीवनस्य क्रमम् अपि निरूपयन्ति। तेषु चित्रेषु प्रमुखं चित्रं तत् यत्र विदेशीयौ वणिजौ स्वकीयम् अश्वं विक्रेतुम् इच्छन्तौ भारतीयराजेन सह वार्तालापं कुर्वन्तौ स्तः।





तत्रत्यैः चित्रैः प्रमाणितं भवति यत् तत्काले एव स्त्रियः सङ्गीताभ्यासे निरताः आसन् इति। अत्र उदाहरणं तु महाराजस्य समक्षं सङ्गीतगोष्ठ्याः चालने उद्युक्तानां स्त्रीणां चित्रम्। सप्तमशतकस्य सभायाः सुस्पष्टं चित्रम् अत्र दृश्यते।

औरङ्गाबादतः ३० कि.मी. दूरे एल्लोरागुहालयाः सन्ति। अत्र बौद्ध-जैनमतसम्बन्धिनः हिन्दुधर्मसम्बन्धिनः च देवालयाः सामान्यतः ३४ सन्ति। एतेषु प्राचीनेषु आलयेषु केचन चतुर्थ-शतकीयाः।





एतेषु आलयेषु अन्यतमः कैलासनाथालयः अपूर्वैः शिल्पैः कलावैभवेन च विराजते। अखण्डायां शिलायां निर्मितः एषः देवालयः अपूर्वताकारणतः प्रपञ्चे अद्वितीयं स्थानम् अर्हति।

१५४ दशाङ्गुलं विस्तृतः २७६ दशाङ्गुलम् उन्नतः च षोडशः गुहालयः विश्वविख्यातः। शिवपार्वत्योः लीलाविलासस्य प्रतिबिम्बकानि अपूर्वाणि अनेकानि चित्राणि अत्र सन्ति।






पञ्चदशे गुहालये स्थितम् अपूर्वं वामनावतारशिल्पं नयनमनोहरम् अस्ति। 'एल्लोरावैशिष्ट्यम्' इति नामके स्वग्रन्थे बि. सिली वदति यत् एल्लोरा गुहालय – समानाः प्राचीनकलावैभव-परिचायिकाः शिल्पकृतयः प्रपञ्चे अन्यत्र कुत्रापि न सन्ति इति।



# पट्टशिलामहिमा

कस्मिंश्चित् ग्रामे काचित् वृद्धा आसीत्। तस्याः द्वौ पौत्रौ। सा स्वमरणं सन्निहितं ज्ञात्वा पौत्रौ आहूय उक्तवती- "यस्मात् लोकात् प्रतिनिवर्तनं नास्ति तादृशं लोकम् अहं गच्छामि। भवतोः निमित्तं मया किमपि न सम्पदितम्। पाकशालायाम् उलूखलं पट्टशिला च अस्ति। उलूखलं ज्येष्ठः स्वीकरोतु। कनिष्ठः पट्टशिलां स्वीकरोतु। यत् लब्धं तेन सन्तोषं प्राप्य सुखेन स्थातव्यम्" इति। अनन्तरं द्वित्रेषु दिनेषु सा दिवंगता च।

"उलूखलेन मम किं प्रयोजनम्? किम् अहं पाचकः भवेयम्?" इति वदन् ज्येष्ठः अन्यं ग्रामं गत्वा श्रमकार्येण जीवनम् आरब्धवान्।

कनिष्ठः पितामह्याः वचनं श्रद्धया पालितवान्। "पट्टशिला निष्प्रयोजिका यदि स्यात् तर्हि पितामही किमर्थं वा स्वीकर्तुं सूचयेत्?" इति तस्य विचारः। पट्टशिलाम् उन्नीय एव सर्वत्र सञ्चरन्तं तं दृष्ट्वा जनाः उपहसन्ति स्म। कनिष्ठः एतद्विषये निर्लिप्तः इव व्यवहरति। अरण्यतः काष्ठम् आनीय ग्रामे विक्रयणं कुर्वन् सः जीवनं यापयति।

एकदा सः अरण्ये शुष्काणां काष्ठानां सङ्ग्रहणे निरतः आसीत्। तदा एकः महावृकः तस्य समीपम् आगतवान्। भीतः कनिष्ठः समीपस्थम् एकं वृक्षम् आरुह्य स्थितवान्।

तदा वृकः अवदत्- " वत्स ! मत्तः भीतिः मास्तु। अहम् अहितं किमपि न आचरामि। भवतः समीपे स्थितां पट्टशिलां ददातु इति प्रार्थयितुम् आगतवान् अहम्" इति।

"तेन भवतः किं प्रयोजनम्?" इति वृकं पृष्टवान् कनिष्ठः।

"मम सहचरः वृकः मृतः। भवतः समीपस्था पट्टशिला तस्य नासिकासमीपे

"बर्मादेशस्य जानपदकथा"



स्थापिता चेत् सः जीवति" इति अवदत् वृकः।

"मम पट्टशिलायाः तावत् सामर्थ्यम् अस्ति वा?" पृष्टवान् कनिष्ठः।

"मया सह आगत्य भवान् एव स्वयं पश्यतु" इति अवदत् वृकः।

कनिष्ठः वृक्षात् अवतीर्य पट्टशिलाम् उन्नीय वृकम् अनुसृतवान्। मृतस्य वृकस्य समीपं तौ गतवन्तौ। कनिष्ठः तां पट्टशिलां मृतस्य वृकस्य नासिकायाः पुरतः स्थापितवान्। तदा सः मृतः वृकः उज्जीवितः अभवत्।

"भवतः एषा पट्टशिला अपूर्वा। यावत् एतस्याः रहस्यम् अन्यः न जानाति तावत् एतस्याः माहात्म्यं तिष्ठति" इति सः वृकः अवदत्।

कनिष्ठः स्वग्रामं प्रत्यागतवान्। ग्रामगमनमार्गे एकस्य शुनकस्य शवः तेन दृष्टः। एषः स्वसमीपे स्थितां पट्टशिलां तस्य नासिकायाः पुरतः गृहीतवान्।

पुनर्जीवनं प्राप्य सः शुनकः पुच्छं चालयन् उत्थितवान्। कृतज्ञताभावेन तेनैव सह प्रस्थितवान् च।

कनिष्ठस्य ख्यातिः अल्पे एव काले सर्वत्र प्रसृता। 'पुनर्जीवनदाता वैद्यः' इति तस्य ख्यातिः आगता। किन्तु प्राणदायकशक्तिः पट्टशिलायाम् अस्ति इति कोऽपि न जानाति। सः पट्टशिलायाः उपयोगसमये सर्वान् तत्प्रदेशतः दूरं प्रेषयति स्म।

एवम् एव दिनानि अतीतानि। कदाचित् महाराजस्य अद्वितीया पुत्री अकस्मात् मरणं प्राप्तवती। एषः कनिष्ठः तत्र गत्वा ताम् उज्जीवितवान्। राजा कृतज्ञताभावेन तस्य प्रशंसां कुर्वन् तस्मै एव स्वपुत्रीं दत्त्वा तं राज्यस्य उत्तराधिकारिस्थाने उपवेशितवान्। राज्ञः जामाता सन् अपि कनिष्ठः मृतोज्जीवनकार्यं न त्यक्तवान्। अतः तस्मिन् राज्ये कस्यापि मरणभयं न आसीत्।

एकदा कनिष्ठस्य मनसि कश्चन विचारः आगतः 'एषा पट्टशिला यदि मरणम् एव निवारयितुं शक्नुयात् तर्हि वार्धक्यं कुतो वा न निवारयेत्? अतः एषा वार्धक्यं निवारयितुं शक्नोति वा न वा इति द्रष्टव्यम्' इति। अतः

सः प्रतिदिनं पट्टशिलायाः गन्धम् आघ्रातुम् आरब्धवान्। पत्नीम् अपि तथा कर्तुं सूचितवान्। सा अपि पट्टशिलायाः आघ्राणनं कर्तुम् आरब्धवती। एतस्य परिणामतः तौ नित्ययुवकौ इव दृश्येते स्म।

तयोः नित्ययौवनं दृष्टवतः चन्द्रस्य मनसि असूया उत्पन्ना। 'सदा यौवनं तु मम एकस्य एव भवेत्, न अन्यस्य कस्यापि' इति तस्य विचारः। सः चन्द्रः कनिष्ठस्य पट्टशिलाम् अपहर्तुं समयं प्रतीक्षमाणः आसीत्।

एकदा कनिष्ठः स्वपट्टशिलां परीक्षितवान्। जलांशकारणतः सा शिला तत्र तत्र शैवालैः लिप्ता आसीत्। शैवालं निवारयितुम् इच्छन् कनिष्ठः पट्टशिलाम् आतपे स्थापितवान्। स्वयं रक्षणार्थम् उपविष्टवान् च।

एतत् दृष्ट्वा राजकुमारी उक्तवती- "किम् एतत् अपमानकरं कार्यम्? किम् अत्र सेवकानाम् अभावः? उत्तिष्ठतु इतः" इति।

"सेवकानां विषये मम विश्वासः नास्ति। रक्षणकार्यार्थम् अहं मम शुनकं नियोजयामि" इति उक्त्वा कनिष्ठः शुनकं रक्षणकार्ये नियोज्य स्वयम् उत्थाय अन्तः गतवान्।

समयं प्रतीक्षमाणः चन्द्रः विना शब्दम् अधः आगत्य पट्टशिलाम् उन्नीय पलायनं कर्तुम् आरब्धवान्। तद्दिने अमावास्या इति कारणतः शुनकः चन्द्रं द्रष्टुं न शक्तवान्। किन्तु शुनकः पट्टशिलायाः गन्धं सम्यक् जानाति। अतः सः चौर्यं ज्ञात्वा गन्धबलेन चन्द्रम् अनुसृतवान्।

इदानीम् अपि सः शुनकः चन्द्रम् अनुसृत्य धावन् एव अस्ति इति बर्मादेशीयाः विश्वसन्ति। यदा चन्द्रग्रहणं भवति तदा "पश्यत! चन्द्रं शुनकः गिलितवान्" इति वदन्ति ते। यदा च ग्रहणमोक्षः भवति तदा ते "शुनकः चन्द्रं वान्तवान्" इति वदन्ति। शुनकस्य आकारः अल्पः इत्यतः चन्द्रः सदा शुनकस्य उदरे स्थातुं न अर्हति इति तेषां विचारः। पट्टशिलायाः अभावात् लोके मरणवार्धक्ययोः यथापूर्वं स्थितिः अभवत्।



# प्रवृत्तेः दास्यम्

अवन्तीदेशस्य महाराजस्य मुखे महाश्मश्रु विराजते। सः प्रतिदिनं तैलं लेपयन्, सुगन्धं लेपयन् च स्वपुत्रम् इव श्मश्रु पालयति।

महाराजस्य क्षौरिकः तिरुमलः। सः कदाचित् क्षौरसमये वार्तालापे मग्नः सन् अजागरूकतया महाराजस्य श्मश्रुणः एकं भागं कर्तितवान्।

अकार्यप्रवृत्तेः अनन्तरं सः अतीव भीतः। 'मम मरणदण्डनं निश्चितम्' इति सः चिन्तितवान्।

तिरुमलः बुद्धिमान्। सः महाराजम् उक्तवान्- "महाप्रभो! मानवः महापुरुषः चक्रवर्ती वा कुतो न भवेत्, किन्तु तस्य दौर्बल्यं किमपि भवति एव। सर्वेऽपि दौर्बल्यस्य दासाः एव" इति।

एतत् श्रुत्वा राजा दर्पेण उक्तवान्- "एतत् अहं न अङ्गीकरोमि। महाराजः अहं कस्यापि दौर्बल्यस्य न दासः। अहं जितेन्द्रियः" इति।

"जितेन्द्रियत्वस्य प्रस्तावः किमर्थम्? सामान्यां प्रवृत्तिम् अपि त्यक्तुं न शक्नुमः वयम्। भवान् सर्वदा स्वश्मश्रुणः उपरि हस्तं स्थापयति खलु? यदि तत् न स्यात् चेदपि भवतः हस्तः अप्रयत्नेन तत्र गच्छेत् एव" इति उक्तवान् तिरुमलः।

तदा राजा दर्पेण उक्तवान्- "मां किमिति भावयति? भवान् मम श्मश्रु निष्कासयतु। तथापि हस्तः तत्र न गच्छति" इति।

मनसि एव हसन् तिरुमलः महाराजस्य समग्रं श्मश्रु निष्कासितवान्।

एकक्षणाभ्यन्तरे महाराजस्य हस्तः पूर्वाभ्यासानुगुणं अप्रयत्नेन मुखप्रदेशं गतः। तत् जानन् महाराजः हसितवान् अपि।

"भवतः वचनं सत्यम् एव" इति वदन् महाराजः स्वकण्ठहारं तिरुमलस्य कण्ठे स्थापितवान्।

इदानीं किं वर्णयेम तिरुमलस्य आनन्दम्?





# कृष्णावतारः

मेरुपर्वते प्रवृत्तां सभां समाप्य नारदः साक्षात् मथुरानगरं गतवान्। यदा सः कंसस्य प्रासादस्य समीपं गतवान् तदा द्वारे स्थितः प्रतीहारी नमस्कृत्य गौरवपूर्वकं तम् अन्तः नीतवान्।

नारदस्य आगमनं ज्ञात्वा कंसः सिंहासनात् उत्थाय नारदं स्वागतीकुर्वन् अर्घ्यपाद्यादिभिः नारदं सत्कृतवान्। कंसस्य सत्कारेण नारदः सन्तुष्टः।

अनन्तरं नारदः कंसम् उक्तवान्– "वत्स! भवान् मम अत्यन्तं प्रियः। अतः भवतः हितचिन्तनं मम कर्तव्यम्। सद्यः अहं तीर्थाटनं कुर्वन् मेरुपर्वतमार्गेण गच्छन् आसम्। तत्र अहं ब्रह्मादिदेवतासहितं देवसभां दृष्टवान्। 'कस्मिन् विषये एषा गम्भीरा चर्चा प्रचलति?' इति ज्ञातुम् इच्छन् अहं तत्र क्षणकालं स्थितवान्।

किं वदामि! भवतः संहारार्थं ते योजनां कुर्वन्तः सन्ति। भवतः पितृव्यपुत्र्याः देवक्याः अष्टमं सन्तानं भवन्तं संहरिष्यति इति मया ज्ञातम्।

देवतानां रक्षकः महाविष्णुः एव देवकीपुत्ररूपेण जन्म प्राप्स्यति। अन्ये देवाः अपि विभिन्नस्थलेषु जन्म प्राप्स्यन्ति।

अतः भवता स्वप्राणरक्षणार्थं योग्या व्यवस्था करणीया।

भवान् तु राजा। साम-दान-दण्ड-भेदेषु यं कमपि उपायम् आश्रित्य भवान् कार्यं कर्तुं शक्नोति। राज्ञः कोऽपि निषेधः नास्ति। अहं भवतः हितेच्छुः। भवान् धर्ममार्गेण चिरं



राज्यं पालयत् इति मम इच्छा। एतां वार्तां श्रावयित्वा भवन्तं जागरयितुम् एव अहम् अत्र आगतवान्'' इति। अनन्तरं सः ततः निर्गतवान् च।

नारदस्य गमनानन्तरं कंसः सभां पश्यन् मन्दहासपूर्वकम् उक्तवान्– ''एतं नारदं विवेकिनं भावयन् अहं तदीयं स्नेहं सम्पादितवान् आसम्। किन्तु इदानीं तस्य विवेकिता प्रकटिता अभवत्। अल्पम् अपि विषयं पर्वतीकृत्य मां भापयितुम् आगतः आसीत् सः।

मम सामर्थ्यं प्रायः सः न जानाति। मां ब्रह्मविष्णुमहेश्वरादयः किं कम्पयितुं वा शक्नुयुः? मम दृष्ट्या अकिञ्चित्कराः ते। यदि अहं कुपितः स्यां तर्हि सर्वाः दिशः कम्पयन् दिक्पालकान् निर्दयं मर्दयेयम्। देवाः मानवरूपेण जन्म प्राप्य किं वा साधयितुं शक्नुयुः?

एषः नारदः तु अनाहूतः प्रविशति। यत् स्फुरति तत् वदति च। अन्येषु कलहम् उत्पाद्य स्वयं सन्तोषम् अनुभवति। एतादृशस्य नारदस्य वचनं सगम्भीरं स्वीकरणीयं नास्ति।

तथापि दूरदर्शिता तु सर्वक्षेमकारिणी। सः वदति यत् यदुकुलात् मम अपायः इति। अतः अरिष्टः, केशिप्रलम्बः, धेनुका, पूतना, कालियः इत्यादयः जागरूकतया तिष्ठन्तः शत्रुनाशं कुर्वन्तु। तैः न केवलं नवजाताः शिशवः मारणीयाः, अपि तु गर्भस्थानि पिण्डानि अपि उन्मूलनीयानि। मम अभयदानं यावत् अस्ति तावत् मम सेवकैः कदापि न भेतव्यम्। एतत्क्षणतः एव सर्वे स्वेच्छया कार्यप्रवृत्ताः भवन्तु'' इति।

एतदनन्तरं कंसः राजसभां विसृज्य अन्तःपुरं प्रविष्टवान्। तत्र विश्वसनीयमित्राणाम् अन्यां सभाम् आयोजितवान्। तत्र सः– ''अद्य आरभ्य देवक्यै विशेषपरिचारिकाणां व्यवस्था भवतु, याः परिचारिकाः गुप्तचरकार्यम् अपि कुर्वन्ति। वसुदेवविषये अपि जागरूकता भवेत् एव। देवकी कदा गर्भधारणं कृतवती? कदा प्रसवः भवेत्? इत्यादिकं विवरणं काले काले मां प्राप्नुयात्। किन्तु एतत्सर्वं



गुप्तरूपेण प्रचलेत्। किमर्थम् एवं प्रचलति इति त् कोऽपि न जानीयात्" इति उक्त्वा सर्वान् विभिन्नकार्येषु नियोजितवान्।

अत्रान्तरे नारदः मथुरानगरात् वैकुण्ठं गत्वा महाविष्णुं दृष्ट्वा कंसस्य मनसि कथं विषबीजं स्थापितम् इति, तस्मात् भीतः सः कथं कार्यप्रवृत्तः जातः इति च विस्तरेण निवेदितवान्।

सः महाविष्णुम् एतदपि सूचितवान् यत् कंसस्य पापघटः इदानीम् एव पूर्णः। अतः दुष्टस्य तस्य संहारार्थम् एषः एव युक्तः समयः इति।

विष्णुः मन्दहासपूर्वकं नारदेन उक्तं सर्वं श्रुत्वा तं प्रेषितवान्। अनन्तरं केन मार्गेण भूलोके अवतरणीयम् इति उपायं चिन्तयितुम् आरब्धवान्।

पाताललोके कालनेमेः षट् पुत्राः आसन्। 'कुतश्चित् अपि मरणं न भवेत्' इति आशया ते ब्राह्माणम् उद्दिश्य कठोरे तपसि लीनाः आसन्।

एतां वार्तां श्रुत्वा कुपितः हिरण्यकशिपुः– "लोकत्रयस्य अपि अधिपतौ कुलश्रेष्ठे मयि विद्यमाने, अन्यस्मात् वरं प्राप्तुम् इच्छन्ति वा भवन्तः? पितुः हस्तात् एव भवतां मरणं भवतु" इति तान् शप्तवान् आसीत्।

एतं प्रसङ्गं स्मरन् विष्णुः योगमायादेवीम् आहूय उक्तवान्– "भवत्या एकं महत्त्वपूर्णं कार्यं साधनीयम् अस्ति। कालनेमेः षट् पुत्राः सन्ति खलु? भवती तान् एकैकशः देवक्याः गर्भे स्थापयतु। यदा ते जन्म प्राप्स्यन्ति तदा कंसः तान् मारयिष्यति। अतः ते कालनेमिपुत्राः हिरण्यकशिपोः शापात् मुक्ताः भविष्यन्ति।

देवकी सप्तमवारं यदा गर्भं धरति तदा भवती तत् पिण्डं रोहिण्या गर्भे स्थापयतु। जनाः चिन्तयन्तु यत् कंसस्य पीडातः भीतायाः देवक्याः गर्भस्रावः जातः इति। रोहिण्याः गर्भतः जातः सः शिशुः मम अग्रजरूपेण वर्धिष्यते।

एतदनन्तरम् अहम् अष्टम सन्तानरूपेण देवक्याः गर्भं प्रविशामि। तस्मिन् एव समये भवती अपि गोपालकस्य नन्दस्य पत्न्याः यशोदायाः गर्भं प्रविशतु। अर्धरात्रसमये

आवां जन्म प्राप्य परस्परं स्थानपरिवर्तनं करिष्यावः।

एतदनन्तरं कंसः यदा भवतीं शिलायां घट्टयित्वा मारयितुम् उद्युक्तः भवति तदा भवती आकाशं प्रविशतु। इन्द्रः भवत्याः स्वागतं करिष्यति। आदिशक्तिरूपेण भवत्याः अभिषेकं करिष्यति च। नीलमेघवर्णां, चन्द्रमुखीं, नीलवस्त्रालङ्कृतां, दिव्याभरणभूषितां, शाङ्र्ग-चक्र-गदा-खड्ग-पद्म-मधुकलश-मुसल-शूलादीन् धृतवतीं भवतीं सर्वे देवाः पूजयिष्यन्ति" इति।

योगमाया विष्णोः एतं प्रस्तावम् अङ्गीकृतवती।

एतदनन्तरं योगमायाप्रभावतः देवकी कालनेमिपुत्रान् षड्वारं स्वगर्भे धृतवती।

तस्याः प्रसवकालं कंसस्य भटाः कंसाय निवेदयन्ति स्म। कंसः अविलम्बेन आगत्य नवजातं शिशुम् उन्नीय शिलायां घट्टयित्वा मारयति स्म। एवम् एव षट् अपत्यानि अपि कंसेन मारितानि।

देवकी यदा सप्तमवारं गर्भं धृतवती तदा योगमाया तं गर्भं गोकुलस्थायाः रोहिण्याः गर्भे स्थापितवती। देवक्याः गर्भस्रावः जातः इति वार्ता सर्वत्र प्रसृता।

युक्ते समये रोहिणी पूर्णचन्द्रसमं सुन्दरं नयनमनोहरं पुत्रं प्रसूतवती। गर्भसङ्कर्षणात् एषः जातः इत्यतः तस्य नाम सङ्कर्षणः इति प्रसिद्धम्। एषः एव कृष्णाग्रजत्वेन प्रसिद्धः बलरामः।

एतदनन्तरं देवकी अष्टमवारं गर्भं





धृतवती। देवक्याः तं गर्भं विष्णोः अंशः प्राविशत्।

तद्दिने एव गोकुले नन्दस्य पत्नी यशोदा अपि योगमायायाः अंशं स्वगर्भे धृतवती।

नवमासानन्तरं श्रावणमासस्य कृष्णपक्षे अष्टम्यां तिथौ मध्यरात्रसमये, पञ्चसु ग्रहेषु उच्चस्थाने स्थितेषु, विष्णोः अंशभूतः कृष्णः देवक्याः गर्भतः जन्म प्राप्तवान्। तत्समये देवकी वसुदेवः च केवलं जागरितौ आस्तां, न तु इतरे।

रक्षकभटाः अपि मायावशात् गाढनिद्रायां मग्नाः आसन्। मन्दा वृष्टिः अपि आसीत् तस्मिन् समये।

यदा कृष्णः जन्म प्राप्तवान् तदा यद्यपि वसुदेवः देवक्याः समीपे न आसीत्, तथापि देवकी पुत्रं प्रसूतवती इति भावः तस्य मनसि उत्पन्नः।

अतः सः त्वरया देवक्याः समीपं गतवान्। देवक्याः पार्श्वे मेघकान्त्या शोभमानः, कृष्णकेशयुतः, सुन्दराङ्गः शिशुः नेत्रं विशालम् उद्घाट्य सर्वत्र पश्यन् आसीत्।

शिशोः अलौकिकेन दिव्यसौन्दर्येण तत्रत्यः परिसरः उज्ज्वलं प्रकाशमानः आसीत्। शिशोः देहे मालिन्यस्य लेशः अपि न आसीत्। कोऽपि तं शिशुं यदि पश्येत् तर्हि निश्चयेन सः ततः दृष्टिं निवारयितुं न शक्नुयात्, तादृशं सौन्दर्यं शिशोः।

"एतं शिशुं दुष्टस्य कंसस्य हस्ततः विमोचयामि। कुत्रापि अन्यत्र स्थापयित्वा कथञ्चित् गोपयिष्यामि" इति आलोचितवान् वसुदेवः।

महतीं वेदनां विनैव प्रसूतिः जाता आसीत्। अग्रे किं करणीयम् इति देवकी अपि न जानाति। प्रश्नार्थकदृष्ट्या सा पतिं दृष्टवती।

वसुदेवः स्वकीये मनसि आगतं विचारं ताम् उक्तवान्।

अनन्तरं देवक्याः पार्श्वे स्थितं शिशुम् उन्नीय वस्त्रेण आच्छाद्य अन्तःपुरम् अतिक्रम्य साक्षात् गोपालकस्य नन्दस्य गृहं गतवान्।

तत्र नन्दस्य पत्नी यशोदा पुत्रीं प्रसूय गाढनिद्रायां मग्ना आसीत्।

वसुदेवः तस्याः पार्श्वे स्वपुत्रं शाययित्वा

सद्योजातं तं स्त्रीशिशुम् उन्नीय स्वगृहं प्रत्यागतवान्।

तं शिशुं देवक्याः पार्श्वे जागरूकतया शाययित्वा कंसस्य समीपं गत्वा शिशुजननवार्तां निवेदितवान्।

निद्रातः उत्थितः कंसः एतां वार्तां श्रुत्वा झटिति ततः प्रस्थाय सूतिकागृहस्य द्वारे स्थित्वा उच्चस्वरेण उक्तवान्– "तं शिशुम् अत्र आनयतु" इति।

तदा देवकी शिशुं दृढम् आलिङ्ग्य– "भ्रातः! कोपं शमयतु। मया प्रसूतः तु स्त्रीशिशुः। स्त्रीतः भवतः कोऽपि अपायः न भवेत् एव। अतः एतं शिशुं कृपया रक्षतु। इतःपूर्वं जाताः पुंशिशवः इत्यतः अहं विना विरोधं भवते अर्पितवती खलु? एततत्सन्दर्भे दयां प्रदर्शयतु। एतां कन्यां रक्षतु" इति. आर्तस्वरेण प्रार्थितवती।

तस्याः प्रार्थनां तृणीकृत्य कंसः सूतिकागृहं प्रविष्टः कंसः देवक्याः हस्ततः बलात् शिशुम् आकृष्टवान्।

तत्र सम्मिलिताः स्त्रियः "हा हन्त!" इति आक्रन्दनं कृतवत्यः।

कंसः तु यथापूर्वं शिशुं मारयितुं वध्यशिलासमीपं गतवान्। यावत् सः शिशुं मारयितुम् उन्नीतवान् तावता सः शिशुः कंसस्य हस्तात् च्युतः सन् आकाशं गत्वा आदिशक्त्याः रूपं धृत्वा स्वहस्तस्थितात् कलशात् मधु पीत्वा अट्टहासपूर्वकम्



अवदत्– "अये दुष्ट! कंस! मां मारयितुं भवान् उद्युक्तः खलु? यदा भवतः प्रबलः शत्रुः भवन्तं मारयितुम् आगमिष्यति तदा अहं मृत्युदेवीरूपेण आगत्य भवतः प्राणान् पास्यामि। भवितव्यं निवारयितुं कोऽपि न शक्नोति इति स्मरतु। कियत्पर्यन्तं भवतः गर्वः प्रचलेत्? भवतः संहारकः एतावता एव जन्म प्राप्तवान् अस्ति" इति। अनन्तरं मा अदृश्या अभवत् च।

भीत्या कम्पमानः कंसः विवेकं प्राप्तवान् इव साक्षात् देवक्याः समीपं गत्वा नमस्कृत्य उक्तवान्– "भगिनि! प्राणभीत्या अहं महत् अकार्यम् आचरितवान्। जातमात्रान् भवत्याः सर्वान् पुत्रान् निर्दयं मारयन् भवतीं शोकसागरे मज्जितवान्। तथापि मम प्रयत्नः

तु विफलः एव।

तुच्छः मानवप्रयत्नः विधिनियमं परिवर्तयितुं न शक्नोति। वयं सर्वे कालपुरुषस्य पुरतः शिशवः। स एव जगतः कारकः, धारकः, संहारकः च। भवती स्वदुःखं सहताम्। मां क्षाम्यतु च'' इति।

देवकी रुदती एव सान्त्वनस्वरेण उक्तवती– ''भ्रातः! मम ललाटे एतादृशं दुःखम् अनुभोक्तव्यम् इति दैवनिर्णयः आसीत्। अत्र भवान् किं वा कर्तुं शक्नोति? भ्रातुः सकाशात् एतादृशं दुःखम् अनुभोक्तुम् एव अहम् इहलोकम् आगतवती। यत् प्रवृत्तं तत् विस्मरतु'' इति। कंसः मौनं ततः निर्गतवान्।

अनन्तरदिने प्रातः एव वसुदेवः नन्दगोपस्य गृहं गतवान्। पुत्रप्राप्त्या सः सन्तोषेण आसीत्।

वसुदेवः नन्दम् उक्तवान्– ''कीदृशः सुन्दरः शिशुः भवतः! वस्तुतः भवान् एव भाग्यवान्! नवजातेन शिशुना सह अद्यैव भवतः गोकुलगमनं वरम् इति मम अभिप्रायः।

तत्र मम पत्न्याः रोहिण्याः अपि एकः पुत्रः जातः अस्ति। तं बालं भवान् स्वज्येष्ठपुत्रं मत्वा पालयतु। एतयोः बालयोः कुतश्चित् अपि कोऽपि अपायः यथा न भवेत् तथा जागरूकतया तिष्ठतु।

एषः कंसः कदापि न विश्वासर्हः। देवक्याः सर्वान् पुत्रान् निर्दयं मारितवान् सः। रोहिण्याः पुत्रः एकः वा जीवितः इति तु सौभाग्यम् एव।

कंसस्य आज्ञया कार्यप्रवृत्तायाः पूतनायाः शिशूनां खादनम् एव कार्यम्। अतः अद्यैव भवान् इतः गोकुलं गच्छतु। करदानार्थं खलु भवान् अत्र आगतवान्? भवतः कार्यं नु समाप्तम् एव। अतः अविलम्बेन यशोदया सह स्वग्रामं गच्छतु। भवन्तं जागरयितुम् एव अहम् एवं त्वरया आगतवान्'' इति।

वसुदेवस्य वचनं पथ्यं मन्यमानः नन्दः यशोदां नवजातं शिशुं च वृषभशकटे आरोप्य ततः प्रस्थितवान्।





# अपात्रे दानम्

श्रावस्तीराज्यस्य राजा सुकेतुसेनः। यदा राजकार्यतः विरामः लभ्यते तदा सः मृगयार्थं गच्छति। एकदा सः एवम् एव मृगयाविहारार्थं गतः वने, नदीतीरे, पर्वते च विहरन् परिजनेभ्यः पृथक् जातः। अग्रे गच्छन् सः दृष्टवान् यत् कश्चन कलाकारः शिलायाः उपरि निश्चिन्ततया सुप्तस्य अजपालस्य सुन्दरं चित्रं लिखन् अस्ति।

सः अजपालः वृक्षच्छायायां शिलायाः उपरि सुप्तः आसीत्। राजा शब्दं विना मन्दं चित्रकारस्य पृष्ठतः गत्वा स्थित्वा चित्रं परिशीलितवान्। चित्रम् अतीव सुन्दरम् आसीत्। वर्णयोजनं तु अपूर्वम्। अजपालस्य मुग्धता स्फुटं दृश्यते स्म। राजा एतेन तुष्टःसन् चित्रकारं वचनैः अभिनन्दितवान्।

चित्रकारः महाराजस्य परिचयं प्राप्य विनयेन नमस्कृत्य उक्तवान्– "महाराज! मम नाम अनन्तः। तं युवकम् अजपालं पश्यतु। अजापालनार्थम् आगतः सः वृकव्याघ्रादीनां सञ्चारयोग्ये अस्मिन् स्थले अजपालनम् आत्मरक्षणं च विस्मृत्य सुखेन स्वपिति। न कापि चिन्ता तस्य। **निद्रादेव्याः** अपूर्वः महिमा" इति।

राजा सुकेतुसेनः स्वकण्ठे स्थितं रत्नहारं चित्रकारस्य कण्ठे स्थापयन् उक्तवान् –"अनन्त! एतत् चित्रम् अहं स्वीकरोमि। पुरस्काररूपेण एतं हारं भवते दत्तवान् अस्मि अपि" इति।

चित्रकारः निद्रायां मग्नम् अजपालम् उत्थाप्य तस्मै तं हारं दत्त्वा महाराजम् उक्तवान्–"महाप्रभो! चित्रलेखने मम किञ्चित् प्रावीण्यं स्यात् नाम। तथापि एतस्य चित्रस्य उत्कृष्टतायाः कारणम् एषः अजपालः एव। वनस्य चित्रं लेखितुम् अहम्

अत्र आगतवान्। एतस्य युवकस्य चित्रणेन वनचित्रे अपि अपूर्वता सिद्धा। अतः भवता दत्तं हारं एतस्मै दत्तवान्। भवान् माम् अन्यथा न चिन्तयति इति अहं भावयामि" इति।

चित्रकारस्य वचनं श्रुत्वा राजा सुकेतुसेनः अङ्गुल्यां स्थितम् अङ्गुलीयकं चित्रकाराय यच्छन् उक्तवान्– "अनन्त! भवता मह्यम् एतादृशम् एव अपूर्वम् अपरं चित्रं लिखित्वा दातव्यम्। तस्य स्मरणार्थम् एतत् अङ्गुलीयकं दत्तम। तादृशस्य दिनस्य प्रतीक्षायाम् अहं भवामि यद्दिने भवान् अपूर्वां कलाकृतिं मह्यं प्रदर्शयिष्यति" इति।

अत्रान्तरे महाराजस्य अन्वेषणं कुर्वन्तः परिवारजनाः तत्र आगतवन्तः। महाराजः तैः सह राजधानीं प्रतिगतवान्।

एतदनन्तरं पञ्चविंशतिः वर्षाणि अतीतानि। एकदा चित्रकारः अनन्तः महाराजस्य आस्थानम् आगतवान्।

तत्समये राजा शृङ्खलाभिः बद्धस्य महाचोरस्य शूलारोपणं दण्डयन् आसीत्। "श्वः एतं शूलम् आरोपयन्तु" इति भटान् आज्ञापितवान् राजा।

अनन्तः कलाकारदृष्ट्या महाचोरस्य अन्तरङ्गं परिशीलयन् आसीत्। तदा महाराजः अनन्तस्य आगमनं ज्ञात्वा "स्वागतं कलाकाराय! अपूर्वा कलाकृतिः कापि आनीता वा?" इति पृष्टवान्।

भटैः कारागारं प्रति नीयमानं महाचोरं प्रदर्शयन् महाराजम् उक्तवान् अनन्तः–



"महाराज! क्रौर्यस्य, काठिन्यस्य, पशुत्वभावनायाः च प्रत्यक्षम् उदाहरणम् अस्ति एषः चोरः। एतस्य जीवच्चित्रं लेखितुम् इच्छामि अहं, यदि भवता अनुमतिः दीयते" इति।

राजा चित्रलेखनार्थम् अनुमतिं दत्तवान्। अनन्तः कारागारं गतवान्। अन्यस्य आगमनं दृष्ट्वा सः चोरः मुखं परिवर्त्य स्थितवान्।

अनन्तः स्वस्य आगमनकारणं निवेदितवान्। एतत् श्रुत्वा चोरः किमपि उत्तरम् अयच्छन् निश्चलस्थित्या किञ्चित्कालं स्थितवान्। अतः अनन्तः अधिकश्रमेण विना एव चोरस्य चित्रं लिखितवान्।

चित्रलेखनसाफल्येन तृप्तः अनन्तः चोरस्य सहकारं कृतज्ञतापूर्वकं स्मरन् पञ्चविंशितिवर्षेभ्यः पूर्वं महाराजेन दत्तम् अङ्गुलीयकं चोराय परितोषिकरूपेण दातुम् उद्युक्तः।

तदा चोरः अङ्गुलीयकदानं तिरस्कुर्वन् अनन्तम् पृष्टवान् –"किं भवान् इतोऽपि मम परिचयं न प्राप्तवान्?" इति।

चोरस्य प्रश्नं श्रुत्वा आश्चर्यं प्रकटयन् अनन्तः चोरः परीक्षादृष्ट्या दृष्ट्वा निराकारपूर्वकं शिरः चालितवान्।

तदा सः चोरः विकटाट्टहासं प्रकटयन् उक्तवान्– "भवान् मम परिचयं न प्राप्तवान्। महाराजः अपि तथैव। एतत् तु मम दौर्भाग्यम्" इति।

चोरस्य कथनस्य आशयम् अजानन्





तं चोरं स्वसमीपम् आनायितवान्।

महाचोरः अनन्तं महाराजाय प्रदर्शयन् उक्तवन् –"महाप्रभो! मम एतस्याः दुर्दशायाः मूलं कारणम् एषः चित्रकारः एव। सः मम एतां दुर्दशां दृष्ट्वा अपि न सन्तुष्टः इति भाति। पुनः अपि मयि धनलोभम् उत्पादयितुं प्रयत्नं कुर्वन् अस्ति। भवता पञ्चविंशतिवर्षेभ्यः पूर्वं दत्तम् अङ्गुलीयकं मह्यं दातुम् उद्युक्तः अस्ति एषः" इति।

राजा पुनः अपि आश्चर्यं प्राप्नुवन् चोरं पृष्टवान् –"मया पूर्वम् एतस्मै चित्रकाराय अङ्गुलीयकं यत् दत्तं तत् भवता कथं वा ज्ञातम्?" इति।

चोरः विचित्रं हासं प्रदर्श्य क्षणकालस्य मौनानन्तरम् उक्तवान्– "महाप्रभो! पञ्चविंशतिवर्षेभ्यः पूर्वं कश्चन मुग्धः अजपालः आसीत्। एकदा यदा सः अजपालः गम्भीरे अरण्ये वृक्षस्य अधः निश्चिन्ततया सुप्तः आसीत् तदा एषः चित्रकारः तस्य चित्रं लिखितवान्। तत्र आगतः भवान् तत् चित्रं दृष्ट्वा सन्तोषेण कण्ठहारं चित्रकाराय दत्तवान्। तं च हारं चित्रकारः अजपालाय दत्तवान्। सः हारः मम विषये शूलयते। यतः अहम् एव सः अजपालः आसम्" इति।

इदानीं राजा सुकेतुसेनः चित्रकारः अनन्तः च पञ्चविंशतिवर्षेभ्यः पूर्वं प्रवृत्तां तां घटनां स्मृतवन्तौ। किन्तु एवं परिवर्तने किं कारणम् इति तौ न ज्ञातवन्तौ। अतः 'तां घटनां वदन्'

अनन्तः आश्चर्येण पृष्टवान् –"यदा महाराजः शूलारोपणम् आज्ञापयन् आसीत् तदा एव अहं तत्र उपस्थितः। महाराजस्य परिचयः भवतः यदि स्यात् तर्हि भवान् तत्समये किमर्थं न स्मारितवान्?" इति।

"परिचयलाभप्राप्तेः समयः अतीतः इति भावयित्वा अहं तदा मौनं स्थितवान्। किम् इदानीं भवान् मां महाराजसमीपं नेतुम् अर्हति?" इति पृष्टवान् चोरः।

चोरस्य कथनस्य पृष्ठभूमौ कापि महत्त्वपूर्णा घटना अस्ति इति भावयन् अनन्तः महाराजं दृष्ट्वा प्रवृत्तं सर्वं निवेद्य चोरस्य अपेक्षां श्रावितवान्। महाराजस्य मनसि अपि कुतूहलम् उत्पन्नम्। सः भटद्वारा

इति राजा साग्रहम् उक्तवान्।

तदा चोरः स्वजीवनवृत्तान्तं निरूपितवान्– "महाप्रभो! भवता उपायनरूपेण दत्तं कण्ठहारं चित्राकरः मह्यं दत्तवान् खलु? अहं तं हारं विक्रेतुम् इच्छन् नगरं गत्वा कस्मैचित् वणिजे प्रदर्शितवान्। सः वणिक् मम वेषाभूषादिकं रत्नहारं च दृष्ट्वा मां चोरं मत्वा नगररक्षकसमीपं नीतवान्। नगररक्षकः मम वचनं कल्पितकथां मन्यमानः मां कारागारे स्थापितवान्। कारागारे तु बहवः चोराः आसन्। तेषां सहवासेन अहम् अपि चौर्यमार्गम् अनुसृतवान्। चौर्यं, हननं, लुण्ठनं, सर्वं मया कृतम्" इति।

राजा आलोचयति –"अरण्ये अजान् पालयन् स्थितः मुग्धः युवकः कथम् एवं महाचोरः संवृत्तः। तत्रापि उपायनरूपेण दत्तः रत्नहारः कारणम्! अहो विधिविलासः!" इति।

राजा चोरं पृष्टवान् -"भवान् यत् हिंस्रकार्यं कृतवान् तद्विषये पश्चात्तापं न अनुभवति वा?" इति।

चोरः शिरः अवनमय्य क्षीणस्वरेण उक्तवान्– "कुतः न? पूर्वम् अपि अनुभूतवान्। किन्तु एकवारं सा वृत्तिः आश्रिता चेत् ततः मोक्षः एव नास्ति खलु? चोरे कः वा विश्वसिति? श्वः मरणं प्राप्स्यतः मम पश्चात्तापेन किं प्रयोजनम्?" इति।

"अहं भवति विश्वसिमि। भवान् मरणदण्डनतः बन्धनतः च इदानीं मुक्तः अस्ति। भवन्तं मम पशुशालायाः निरीक्षकत्वेन नियोजयिष्यामि। उत्तमव्यवहारेण शिष्टम् आयुः सार्थकीकरोतु" इति उक्त्वा स्वकण्ठे स्थितम् अमूल्यं रत्नहारं चित्रकाराय अनन्ताय यच्छन् राजा हसन् उक्तवान् -"अपात्रे दानम् अनर्थाय इति प्राचीनाः युक्तम् एव उक्तवन्तः। देशं कालं च परिशील्य सत्पात्रे दत्तं चेदेव फलम्। एतं हारम् अपि अन्यस्मै अपात्राय दत्त्वा तम् आपदि न पातयतु" इति।





# ब्रह्मराक्षसः

वीरपुरग्रामे मनोहरः नाम निर्धनः कृषिकः आसीत्। तस्य पत्नी कमला। बहुकालानन्तरं तयोः दम्पत्योः एकः पुत्रः जातः। तौ पुत्रस्य नाम सुदर्शनः इति निश्चितवन्तौ।

यदा सः किञ्चित् प्रवृद्धः तदा विद्यायां विशेषासक्तिं प्रदर्शितवान्। सुदर्शने मातापित्रोः अपरिमिता प्रीतिः। पुत्रस्य आसक्त्यनुगुणं तौ तं ग्रामपण्डितस्य रामाचार्यस्य गुरुकुलं प्रति प्रेषितवन्तौ।

सुदर्शनः श्रद्धया विद्याभ्यासं कुर्वन् गुरुः यावत् जानाति तावत् पठितवान्। रामाचार्यस्य कवितारचनायां सामान्यं सामार्थ्यम् आसीत्। एतत् अनुकुर्वन् सुदर्शनः अपि कविताः रचयितुम् आरब्धवान्।

यदा गुरुकुलविद्या समाप्ता तदा रामाचार्यः सुदर्शनेन सह तदीयं गृहं गत्वा तदीयौ मातापितरौ उक्तवान्– "एषः प्रयत्नेन महाकविः भवितुम् अर्हति। किन्तु तेन कः लाभः? जीवननिर्वहणे महान् क्लेशः। अन्यच्च अस्माकं देशस्य राजा अपि कविषु आदरवान् न। अतः एतं कृषिकार्ये एव नियोजयन्तु" इति।

किन्तु सुदर्शनः कृषिकार्ये सर्वथा अनासक्तः। सः मन्दस्वरेण किमपि गायन् प्रकृतिसौन्दर्यम् आस्वादयान् कुत्रापि उपविशति।

पुत्रस्य मनःक्लेशम् उत्पादयितुम् अनिच्छन् मनोहरः पत्नीम् उक्तवान्– "तस्य यत्र आसक्तिः तं मार्गम् अनुसरतु सः। भाविजीवने सः सम्पादनेन विना अपि सुखं जीवितुं यथा शक्नुयात् तथा वयं यथेष्टं धनं सम्पाद्य स्थापयेम" इति।

किन्तु दौर्भाग्यं किमिति वदेम, एकदा कृषिक्षेत्रे कार्यं कुर्वन् मनोहरः सर्पेण दष्टः

तत्रैव मरणं गतवान्। पत्युः मरणवार्ता श्रुत्वा मूर्च्छां गता पतिता कमला अपि न उत्थितवती।

मातापितृभ्यां विहीनं सुदर्शनं बान्धवाः कानिचन दिनानि स्वगृहं नीतवन्तः। किन्तु वञ्चनापूर्णां गणनां प्रदर्शयन्तः तदीयाम् अल्पाम् अपि भूमिं स्वायत्तीकृतवन्तः।

सुदर्शनः बन्धूनां निर्दाक्षिण्यव्यवहारात् खिन्नः कमपि अनुक्त्वा तद्दिने एव मौनं ततः निर्गतवान्। कुत्र गन्तव्यम् इति सः स्वयं न जानाति। अतः एकं मार्गम् अनुसृतवान्। वनमार्गेण गच्छन् सः बुभुक्षितः पिपासितः च अभवत्। श्रान्ति-निवारणार्थं सः कस्यचित् वृक्षस्य छायायाम् उपविष्टवान्। तत्रत्यं प्राकृतिकं सौन्दर्यं दृष्टवतः तस्य मुखात् अप्रयत्नेन एव कश्चन सुन्दरः श्लोकः निर्गतः।

यस्य वृक्षस्य अधः सुदर्शनः उपविष्टवान् तस्मिन् वृक्षे बहोः कालतः कश्चन ब्रह्मराक्षसः निवसति। सः कविताप्रियः।

सुदर्शनस्य मुखात् निर्गतं श्लोकं श्रुत्वा ब्रह्मराक्षसः वृक्षात् अवतीर्य सुदर्शनम् उक्तवान् -" भोः! बहोः कालात् अनन्तरं सुन्दरं काव्यं शृण्वन् अस्मि। भवान् अद्य आरभ्य प्रतिदिनं मह्यं रमणीयं काव्यं श्रावयतु। प्रतिफलरूपेण भवान् यत् इच्छति तत् ददामि" इति।

सुदर्शनः ब्रह्मराक्षसस्य प्रस्तावम् अङ्गीकृतवान्।

कानिचन दिनानि एवम् एव अतीतानि।





'अहम् अरण्ये ब्रहमराक्षसस्य समीपे अस्मि' इत्यपि विस्मृतवान् सुदर्शनः। एवं स्थिते एकदा ब्रहमराक्षसः उक्तवान्– "अद्यपर्यन्तं भवान् विविधविषयकान् श्लोकान् श्रावितवान्। प्रतिफलरूपेण अहं भवतः सेवां कृतवान्। अद्य भवता माम् अधिकृत्य श्लोकः रचनीयः" इति।

"अहं यां प्रकृतिम् अद्यावधि वर्णितवान् सा कदापि स्वविषये श्लोकं रचयितुं मां न आदिष्टवती। यथा प्रेरणा भवति, यच्च मह्यं रोचते तदधिकृत्य अहं पद्यं रचयामि। आदेशेन बलात्कारेण वा अहं पद्यं न रचयामि" इति उक्तवान् सुदर्शनः।

"भवता मद्विषये पद्यं रचनीयम् एव। अन्यथा एतस्मात् अरण्यतः भवतः बहिर्गमनं न भविष्यति" इति कोपेन उक्तवान् राक्षसः।

"भवतः क्रोधः तर्जनं वा मयि काव्यप्रेरणां न जनयति। इतः परं भवतः इच्छा। भवान् यथा इच्छति तथा कर्तुम् अर्हति" इति शान्तस्वरेण एव उक्तवान् सुदर्शनः।

तद्दिनतः ब्रह्मराक्षसः सुदर्शनाय भोजनदानं स्थगितवान्। तथापि सः ब्रह्मराक्षसविषये पद्यं न लिखितवान्। कुपितः राक्षसः तम् उपरि क्षिपन् कन्दुकेन इव क्रीडति।

अन्ते नितरां क्रुद्धः ब्रह्मराक्षसः सुदर्शनस्य पादौ गृहीत्वा परितः भ्रामयन् वेगेन सुदूरं क्षिप्तवान्। भूमौ कुत्रापि सुदर्शनः यदि पतेत् तर्हि तस्य प्राणाः निर्गताः अभविष्यन्। दैवयोगः इत्येव वक्तव्यं, सः हंसतूलिकातल्पे पतितवान्, येन अल्पः व्रणः अपि तस्य न जातः।

अकस्मात् आगत्य शय्यायां पतितं सुदर्शनं दृष्ट्वा राजा चकितः सन् पृष्टवान् –"कः भवान्? कथम् अत्र आगतवान्?" इति।

सुदर्शनः प्रवृत्तं सर्वं निवेदितवान्। एतादृशी घटना कुत्रापि विश्वासयोग्या न, तथापि स्वयं दृष्टम् इत्यतः राजा अङ्गीकृतवान्। सम्भाषणसमये सुदर्शनः द्वित्राणि पद्यानि श्रावितवान्। एषः किञ्चित्कालं तिष्ठतु इति आलोच्य उक्तवान्– "भवान् कानिचन दिनानि मम आस्थाने तिष्ठतु" इति। सुदर्शनः अङ्गीकार

मूचितवान्।

सुदर्शनस्य कवितां श्रुत्वा राजस्थाने स्थिताः सर्वेऽपि सन्तोषम् अनुभूतवन्तः। तेन रचितानि गीतानि जनानां मुखेषु विलसन्ति। जनाः प्रतिदिनम् अपि तस्य स्तुतिं कुर्वन्ति।

एकस्मिन् दिने राज्ञी महाराजम् उक्तवती— "स्वामिन्! कविः स्वकविताशक्त्या अतीव साधारणम् अपि विषयं श्रेष्ठतापदवीम् आरोपयितुं शक्नोति। सः यं कमपि जनप्रियं लोकश्रेष्ठं च कर्तुम् अर्हति। अतः भवान् राजकविं सुदर्शनम् आज्ञापयतु यत् सः मां नायिकां परिकल्प्य, भवन्तं च नायकं परिकल्प्य अत्युत्कृष्टं काव्यं रचयतु" इति।

एतत् वचनं राज्ञः अपि प्रियं जातम्। अतः सः राजकविं सुदर्शनं स्वसमीपम् आहूय स्वकीयं विचारम् उक्त्वा काव्यं रचयितुम् आदिष्टवान्।

तदा सुदर्शनः विनयेन उक्तवान्— "प्रभो! क्षाम्यतु माम्। यत् सौन्दर्यं मम मनः न आकर्षति, तादृशं सौन्दर्यं मां काव्य-रचनार्थं प्रेरयितुम् न अर्हति। कस्यापि अनुरोधेन आदेशेन वा अहं काव्यं रचयितुं न शक्नोमि। काव्यं तु अन्तरालात् उद्भवति खलु?" इति।

"एतद्विषये पुनः विचिन्त्य सप्ताहाभ्यन्तरे निर्णयं वदतु" इति उक्त्वा राजा सुदर्शनकविं प्रेषितवान्। सप्ताहानन्तरम् अपि सुदर्शनः पूर्वतनम् एव अभिप्रायं पुनः प्रकटितवान्। तदा क्रुद्धः राजा तं कारागारे स्थापितवान्।

एकं वर्षम् अतीतम्। कदाचित् राजा कविं



सुदर्शनं दृष्ट्वा पृष्टवान् –"कथम् अस्ति कारागारवसतिसुखम्?" इति।

तदा सुदर्शनः उक्तवान् –"प्रभो! अत्रापि अहं सुखेन अस्मि। एकाकिता मां भगवतः विषये प्रेरितवती। अतः अहं तस्य महिमातिशयस्य वर्णनपूर्वकं पद्यानि रचयन् सन्तोषेण अस्मि। अत्र न कोऽपि क्लेशः मम" इति।

"दर्शनातीतं भगवन्तं स्तुवन् भवान् काव्यं रचयति किल? प्रत्यक्षदेवतं माम् उद्दिश्य कुतः वा काव्यं न रचयति? भवान् यत् इच्छति तत् अहं दातुं समर्थः अस्मि।" इति।

तदा कविः सुदर्शनः एकाम् आशुकवितां रचयित्वा उक्तवान्। तस्य भावः एवम् आसीत् –"अहं चिन्तितवान् आसं यत् अदृष्टदेवता मां ब्रह्मराक्षसतः रक्षितवती इति। किन्तु वस्तुतः तु सा माम् अपरस्य ब्रह्मराक्षसस्य समीपं प्रापितवती। एषा वस्तुस्थितिः मया विलम्बेन ज्ञाता। ब्रह्मराक्षसाः स्वदर्पेण कवीन् पीडयितुं शक्नुयुः। किन्तु कदापि कवौ कविताप्रेरणां जनयितुं न शक्नुवन्ति" इति।

सुदर्शनस्य कवितां श्रुतवति महाराजे विवेकः उत्पन्नः। सः ज्ञातवान् यत् मानवकुले जातस्य अपि मम, ब्रह्मराक्षसस्य च मध्ये कोऽपि भेदः नास्ति इति। अतः सः सुदर्शनं कारागारतः विमोचयन् उक्तवान्– "कविवर! इतः परं भवान् अन्तःप्रेरणानुगुणं काव्यानि रचयन् मम आस्थाने स्थातुम् अर्हति। भवन्तं कोऽपि न निर्बध्नाति" इति।

एतदनन्तरं राजा राज्ञी च कवीनां विषये विशेषादरं प्रकटयितुम् आरब्धवन्तौ। अल्पे एव काले तौ काव्यकलामर्मज्ञौ जातौ। तयोः जीवने महत् परिवर्तनं जातम्।

इदानीं तयोः गुणातिशयेन आकृष्टः सुदर्शनः राज्ञीं नायिकां, राजानं नायकं च परिकल्प्य एकम् उत्तमं काव्यं रचितवान्।

एवं राजा स्वगुणैः कविम् आकृष्य कवितारचनायां तं प्रेरितवान्। सुदर्शनः अपि तं स्वकाव्ये उदात्ततया एव वर्णितवान्।






# पत्न्याः उपदेशः

पूर्वं मनोहरपुरे रमणः नाम कश्चित् आसीत्। तस्य पत्नी राधा। रमणः जन्मना महालसः। गृहे भुक्त्वा सः ग्रामे सर्वत्र इतस्ततः अटति। धनसम्पादनविषये कदापि न चिन्तयति।

कदाचित् गृहे पाकार्थं किमपि नास्तीति राधा पाकं न कृतवती। भोजनसमये गृहम् आगतः रमणः पत्नीं भोजनं परिवेष्टुं सूचितवान्। तदा क्रुद्धा राधा- "किञ्चिदपि न सम्पादयति। समये भुक्त्वा इतस्ततः अटन् समयं यापयति। भवान् यदा किञ्चित् सम्पाद्य आनयति तदा एव पाकः। सम्पादनं कार्येण वा भवेत् चौर्येण वा भवेत्। विना सम्पादनं पाकः तु सर्वथा नास्ति" इति उक्तवती।

तदा रमणः चकितः सन् पृष्टवान्- "किं चौर्यं करोतु इति मां वदति वा? चौर्यं पापकरं न वा?" इति।

"पापं पुण्यम् इत्यादिकम् अहं न जानामि। रिक्तहस्तः सन् प्रत्यागमिष्यति चेत् योग्या पूजा क्रियते" इति वदन्ती राधा सम्मार्जनीम् उन्नीय प्रदर्शितवती।

"अस्तु तावत्। चौर्यम् एव कुर्याम् इति चिन्तयतु। कुत्र करणीयम्? कथं करणीयम्? भवती एव सर्वं सूचयतु" इति उक्तवान् रमणः।

"प्रातः सूर्यः यदा उदयाचलात् अग्रे गच्छति तदा सर्वे कृषिक्षेत्रं गमिष्यन्ति। तदा जनरहितं गृहं प्रविश्य तण्डुलधान्यादिकं यावच्छक्यं चोरयतु" इति मार्गम् उपदिष्टवती राधा।

रमणः एतत् अङ्गीकृतवान्। एतदनुगुणं सः प्रातः नववादनसमये गृहात् निर्गच्छति। बहुकालानन्तरम् अपि पतिः यदा न

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

प्रत्यागच्छति तदा राधा मार्गम् आगत्य 'जलं क्वथति' इति उच्चैः वदति। एतत् श्रुत्वा रमणः किञ्चन गृहं प्रविश्य यावत् आवश्यक तावत् चोरयित्वा प्रत्यागच्छति।

प्रतिदिनम् अपि एवम् एव प्रचलति। रमणः गृहोपयोगार्थं यावत् आवश्यकं तावत् एव चोरयति, न अधिकम्। गृहे स्थितानि धनाभरणादीनि सः न पश्यति अपि।

कानिचन दिनानि एवम् एव अतीतानि। स्वगृहे पाकवस्तूनां चौर्यं प्रचलति इति ग्रामीणाः ज्ञातवन्तः। प्रतिदिनम् अपि प्रचलतः चौर्यस्य मूलकारणं चोरं ग्रहीतुं ते सम्भूय योजनां कृतवन्तः।

एकदा रमणः चौर्यार्थं ग्रामज्येष्ठस्य गृहं प्रविष्टवान्। एतस्य एव प्रतिक्षायां स्थिताः जनाः तं झटिति गृहीतवन्तः। गृहस्य पुरतः स्तम्भे बद्धवन्तः च।

महता विलम्बेन अपि पतिः यदा न प्रत्यागतः तदा राधा मार्गम् आगत्य उच्चैः उक्तवती- "जलं क्वथति" इति।

एतत् श्रुत्वा रमणः अपि उच्चस्वरेण– "स्तम्भे बद्धः अस्मि" इति उक्तवान्।

एवं वचनं प्रतिवचनं च श्रुत्वा ग्रामीणाः आश्चर्यचकिताः। ग्रामप्रमुखः रमणस्य समीपम् आगत्य पृष्टवान्- "किम् एतत्?" इति।

तदा रमणः अश्रूणि स्रावयन् पूर्वं प्रवृत्तं सर्वम् विस्तरेण उक्तवान्। ग्रामीणाः उदरोपपीडं हसितवन्तः।

ग्रामज्येष्ठः राधां स्वगृहम् आनाय्य तर्जितवान्- " पति चौर्यं बोधयति वा? किम् एतत् शोभते?" इति। अनन्तरं रमणं दृष्ट्वा- "इतः परं कुत्रापि एवं चौर्यं करोति चेत् कारागारं प्रति प्रेषयिष्यामि। श्वः आरभ्य भवान् मम गृहे कार्यं करोतु। पुरुषः कार्यं कुर्यात्, न तु चौर्यम्" इति उक्तवान्।

अनन्तरदिनतः रमणः ग्रामप्रमुखस्य गृहे कार्यं कर्तुम् आरब्धवान्। राधा अपि तथैव कर्तुम् आरब्धवती। उभयोः सम्पादनेन तयोः जीवनं सुखमयं जातम्।



# प्रकृतिवैचित्र्याणि-

## शम्बूकगतिः



शम्बूकः बहुवेगेन गच्छति चेदपि प्रतिघण्टं १६५ फूट् गन्तुं शक्नोति। तन्नाम प्रतिघण्टं ०.०३१३ मैल् (५०.३ मीटर्) वेगेन गच्छति इत्यर्थः।

## केशनिर्मितं शृङ्गम्!



हरिणशृङ्गम् इव खड्गमृगस्य शृङ्गं अस्थिभिः तत्सदृशेन पदार्थविशेषेण वा निर्मितं न। सान्द्रैः केशैः एतत् शृङ्गं निर्मितं भवति!

## अनुवर्ती अग्रेसरः



कादम्बपक्षिणः 'V' आकारेण प्रयाणं कुर्वन्ति। अग्रेसरं पक्षिणम् इतरे अनुसरन्ति। अग्रेसरः पक्षी किञ्चित्कालानन्तरं स्वपृष्ठतः स्थिताय पक्षिणे अग्रे गन्तुम् अवकाशं कल्पयति। एते पक्षिणः कदापि समूहात् भ्रष्टाः न भवन्ति।

## अनुकारी पक्षी

छाविञ्छनामकः पक्षी स्वतन्त्रतया न गायति। सदापि इतरपक्षिणः रवम् अनुकुर्वन् तेनैव स्वरेण गायति सः।





# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अकिञ्चित्करः - | Wholly Unequal | परशुः - | Axe |
| अजपालः - | Goat-herd | प्रवृत्तिः - | Nature |
| अनाहूतः - | Uninvited | भित्तिचित्रम् - | Wall painting |
| अनुरोधः - | Compulsion | मक्षिका - | Fly |
| अप्रबुद्धः - | Immature | मत्तः - | Intoxicated |
| आघ्राणनम् - | Smelling | मिष्टखाद्यम् - | Sweet-meat |
| आतपः - | Sunshine | मृदुला - | Soft |
| आदेशः - | Order | लवित्रम् - | Sickle |
| उद्वेजयति - | Excites | लोहकारः - | Blacksmith |
| उन्मत्तः - | Insane | लोहशाला - | Smithy |
| उलूखलः - | Stone-mortar | वान्तवान् - | Vomited |
| कन्दुकम् - | Ball | विकत्थनम् - | Boasting |
| कादम्बपक्षी - | Crane | वृकः - | Wolf |
| काष्ठम् - | Wood | शम्बूकः - | Snail |
| कोषघटी - | Pocket watch | शृङ्गम् - | Horn of an animal |
| क्वथति - | Boils | शैवालः - | Lichen |
| क्षौरिकः - | Barber | श्मश्रु - | Moustache |
| जामाता - | Son-in-law | सङ्कर्षणम् - | Drawing out for transfer |
| दुर्मिश्रणम् - | Adulteration | | |
| धात्री - | Foster-mother | सघोषविक्रयणम् - | Auction |
| निर्बध्नाति - | Compels | सम्मार्जनी - | Broom |
| पट्टशिला - | Round stone for grinding | * * | * * |



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां फेब्रवरी-८८ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा डिसेम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'अक्टोबर्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **गतः सागरः, किन्तु जलं जानुदघ्नम् एव।**

द्वितीयचित्रम् - **धृतम् आतपत्रं, किन्तु जलं स्वेदजन्यम् एव।**

प्रेषकः - वि.एस्. शर्मा, हुलेगारु, सागर, शिवमोग्गामण्डलम्-५७७४०१


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३०-००

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**


---

# मातः, किम् आवश्यकम्?

| | |
|---|---|
| विक्रेत्री - आगच्छतु मातः, किम् आवश्यकम्? | Welcome Madam! What can I do for you? |
| ग्राहिका - पटोलिकायाः किं मूल्यम्? | What is the price of snake-gourd? |
| वि - एकस्य पञ्च रूप्यकाणि। पश्यतु, बहु समीचीनम् अस्ति। | Five rupees each. See, it is a fine quality gourd! |
| ग्रा - पञ्च रूप्यकाणि! | Each five rupees! |
| वि - आम्, अम्ब! श्वः पर्वदिनं खलु। अतः सर्वस्य अपि मूल्यम् अधिकम् एव। | Yes Madam, tomorrow is a festive day. So the prices of all commodities have gone up. |
| ग्रा - वास्तुकबन्धाः रूप्यकस्य कति? | How many bundles of greens a rupee? |
| वि - रूप्यकस्य षट्, पश्यतु, तरुणानि कोमलानि च। | Six bundles. See, they are tender and fresh! |
| ग्रा - अष्ट बन्धान् ददाति वा? | Can you make it eight? |
| वि - अष्टबन्धान् दातुं न शक्नोमि अम्ब! सप्त स्वीकरोतु। रूप्यकद्वयस्य ददामि? | I can't, Madam. Make it seven. Shall I give you for two rupees? |
| ग्रा - तावत् किमर्थम्, एकरूप्यकस्य ददातु। एतावत् अपि अधिकम् एव। | Not that much. Give me for just a rupee. Really speaking even that is too much! |
| वि - स्वीकरोतु, अन्यत् किं ददामि? | Please take it. What else can I give you? |
| ग्रा - उर्वारुकं समीचीनम् अस्ति वा? | Is cucumber good? |
| वि - भवती एव पश्यतु, एतत् रूप्यकस्य एकम्। एतस्य रूप्यकद्वयम्। | You see. This costs a rupee. That is two rupees. |
| ग्रा - किं भोः, लघ्वाकारकस्य अपि रूप्यकद्वयं वदति? मह्यम् एतादृशं द्वयम् आवश्यकं, कियत् दातव्यम्? | You say it is two rupees. Even that is small! I need two. How much shall I pay? |
| वि - रूप्यकत्रयं ददातु। जम्बीरफलानि ददामि वा? | Pay three rupees. Shall I also give a lemon? |
| ग्रा - मास्तु। अद्य एतावदेव पर्याप्तम्। | No, this much is enough for to-day. |




# *CHANDAMAMA*

It unfolds the glory of India—both past and present—through stories, month after month.

Spread over 64 pages teeming with colourful illustrations, the magazine presents an exciting selection of tales from mythology, legends, historical episodes, glimpses of great lives, creative stories of today and knowledge that matters.

**In 11 languages and in Sanskrit too.**

Address your subscription enquiries to:

**DOLTON AGENCIES** 188 N.S.K. ROAD MADRAS-600 026